गीर्वाणग्रामणीभिर्गगनतलगतैर्गीभिरुद्गीयगाभि-
गन्धर्वैश्चापि गीता गुणगणगरिमोद्गारिगाथासहस्रैः ।
गाहगाह गृहालीरगतिकगदिना गन्धयन्तो गदार्ति
ग्लानिग्राम ग्रसन्ता ग्रहरुचिगुरवो गोपतेर्गोविलासा ॥१७॥

जीवातुर्जाड्यजालाधिकजनितरुजा तप्तजाम्बूनदाभ
जडधाल जाड्यिकाना जलधिजठरतो जृम्भमाण जगत्याम् ।
जीवाधान जनाना जनकमय रुचो जीवजैवातृकादे-
र्ज्योतिर्जाज्वल्यमान जलजहितकृतो जायता वो जयाय ॥१८॥

प्रातर्निर्गत्य गोभि सह रुचिविषये सचरन्त्योऽह्नि ताभि
साक साय निकाय प्रति पुनरपि या सम्प्रयातु त्वरन्ते ।
यासा दिव्यप्रभावस्त्रिजगदघवनश्रेणिदाहैकदाव
क्षेम तन्वन्तु ता व शिवमयवपुषो वासरेशस्य गाव ॥१९॥

वृन्दैर्वृन्दारकाणा दनुजतनुजुषा रक्षसा च क्षपान्ते
गन्धर्वाणा धुरीणै प्रणतमहिवरैः किन्नरैर्यन्नरैश्च ।
विद्या हृद्या निजेभ्यो वितरदविरत दीप्तिभिर्दीपयद द्या-
मद्यादाद्यामविद्यामिदमुदयगिरेरुद्यदर्कस्य बिम्बम् ॥२०॥

आपाथोजासनायु क्षणलवघटिकाद्यात्मक कालचक्र
प्राहु पूर्वे पुराणागमविषयविदो यस्य लीलाविलासम् ।
भावाना षड विकारानय खलु गतिभिर्यश्च नित्य प्रसूते
स प्रात पौरुहूते परिलसति हरिन्मण्डले चण्डभानु ॥२१॥

अङ्गानि ब्राह्मणानामुषसि हिमभरासङ्गतो भङ्गुराणि
व्यालस्य द्राक् प्रयाता रिपुजनितरुषेवारुणा वासवाशाम् ।
धर्मध्वसोद्धुराणामखिलमपि कुल जक्षत शोभितक्ष्मा
यक्ष्माण मे हरन्तु त्वरितमघभिदो भानवश्चण्डभानो ॥२२॥

विश्रान्ति ब्राह्मणाना सुखमतिशयित कामिना स्वायिलीला-
मम्भोजाना प्रबोध कुसुमपरिषदा यश्चिकीर्षन् दयार्द्र ।
निर्यातयन्त समुद्र सकलमपि नृणा भारमाधाय वह्ना-
वह्नायाह्नामधीश स भवतु भवता भूयसे मङ्गलाय ॥२३॥

द्रागाहृत्य प्रभाते रजनिहिमवत कौमुदी कौतुकेन
प्रोद्यत्प्रौढानुकम्पा पुनरपि खलु ये सायमुज्जीवयन्ति ।
आरण्ये पल्लवानामथ गुरुचरणा शक्रगोपावलीना
ते युष्मद्भावलीना दिनकरकिरणा क्लान्तिमुन्मूलयन्तु ॥२४॥

द्रागद्वैतं वितन्वंस्त्रिभुवनमभितः कौङ्कुमीनां द्युतीनां
न्यक्कुर्वन् मान्द्यमुद्रामथ रजनिरुजां कोकसीमन्तिनीनाम् ।
तन्द्रान्धानाम्ब्यसिन्धोरिह विततरैरुद्द्यानं कराग्रैः
स्वान्तध्वान्तं धुनोतामुदयगिरिशिरश्चुम्बि मार्तण्डबिम्बम् ॥२५॥

शुद्धं ब्रह्मालवालं प्रकृतिशबलितं यस्य मूलं करास्त-
द्राघिष्ठस्वर्णशाखा विकसदरुणिमा पल्लवानां विलासः ।
नीलं व्योमालिमाला सुरसफलभरो धर्मकामार्थमोक्षाः
स श्रीमान् वाञ्छितार्थं वितरतु सततं सूर्यकल्पद्रुमो वः ॥२६॥

नीहारं निम्नगाभ्यो निखिलनयनतो नीरजेभ्यश्च निद्रां
नीडेभ्यो नीडजानां निकरमुषसि ये नित्यमुद्वासयन्ति ।
सायं तेष्वेव तेषां पुनरपि घृणया कल्पयन्ते च वासं
ते वः सन्तु प्रयासं घृणिघनघृणयो हन्तुमाबद्धकक्षाः ॥२७॥

संहृत्य द्राग् बहिःस्थं तिमिरकुलमथाभ्यन्तरं हर्तुकामा
रन्ध्रालीभिर्गृहाणामुदरमनुदिनं येऽविशङ्कं विशन्ति ।
भानोस्तेऽमी हृषीकाण्यखिलतनुभृतां हर्षयन्तो हितेहा
हृद्रोगं संहरन्तां हिममहिमहृतो हेमहृद्याः करा नः ॥२८॥

ब्रह्माण्डं मण्डयन्तो वियति चलयिनो मण्डलैरण्डजानां
पाखण्डान् दण्डयन्तो दनुतनुजनुषां शोभिताखण्डलाशाः ।
ये षण्डान् पौण्डरीकान् विदलयितुमयोद्दण्डपाण्डित्यभाज-
स्ते चण्डांशोरखण्डास्त्वरितमिह कराः पाण्डुतां खण्डयन्तु ॥२९॥

ऊर्ध्वं पापावलिभ्यः स्थित इति जगदे यस्य वेदैरुदाख्या
निम्नुः कप्यासनाभं खलु सहचरतां नेत्रयोः पुण्डरीकम् ।
गेष्णावृक्साम यस्य द्रुतकनकनिभश्मश्रुकेशाखिलाङ्गः
सोऽयं सर्वान्तरात्मा तव दिशतुतरां वासरेशः शिवानि ॥३०॥

---

# (६) प्रास्ताविकविलासः

दिगन्ते श्रूयन्ते मदमलिनगण्डा करटिन
करिण्य कारुण्यास्पदमसमशीला खलु मृगा ।
इदानीं लोकेऽस्मिन्ननुपमशिखाना पुनरय
नखाना पाण्डित्य प्रकटयतु कस्मिन मृगपति ॥१॥

पुरा सरसि मानसे विकचसारसालिस्खलत-
परागसुरभीकृते पयसि यस्य यात वय ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायक कथय रे कथ वर्तताम ॥२॥

तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे
मौन मुञ्चति कि च कैरवकुले कामे धनुर्धुन्वति ।
माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना
धात किं नु विधौ विधातुमुचितो धाराधराडम्बर ॥३॥

अयि दलदरविन्द स्यन्दमान मरन्द
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गा ।
दिशि दिशि निरपेक्षस्तावकीन विवृण्वन
परिमलमयमन्यो बान्धवो गन्धवाह ॥४॥

समुपागतवति दैवादवहेला कुटज मधुकरे मा गा ।
मकरन्दतुन्दिलानामरविन्दानामय महामान्य ॥५॥

तावत कोकिल विरसान यापय दिवसान् वनान्तरे निवसन् ।
यावन् मिलदलिमाल कोऽपि रसाल समुल्लसति ॥६॥

नितरा नीचोऽस्मीति त्व खेद कूप मा कदापि कृथा ।
अत्यन्तसरसहृदयो यत परेषा गुणग्रहीतासि ॥७॥

कमलिनि मलिनीकरोषि चेत
किमिति बकैरवहेलितानभिज्ञै ॥
परिणतमकरन्दमार्मिकास्ते
जगति भवन्तु चिरायुषो मिलिन्दा ॥८॥

येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत ।
कुटजे खलु तेनहा तेने हा मधुकरेण कथम् ॥९॥

अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते ।
उद्गिरतो यद् गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥१०॥

पाटीर तव पटीयान् कः परिपाटीमिमामुरीकर्तुम् ।
यत् पिंषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥११॥

नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥१२॥

उपरि करवालधाराकाराः क्रूरा भुजङ्गमपुङ्गवात् ।
अन्तः साक्षाद् द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥१३॥

स्वच्छन्दं दलदरविन्द ते मरन्दं
विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः ।
आमोदानथ हरिदन्तराणि नेतुं
नैवान्यो जगति समीरणात् प्रवीणः ॥१४॥

याते मय्यचिरान् निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला ।
एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग् वारिधीनां जनुः ॥१५॥

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ति ।
संकोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु ॥१६॥

मधुप इव मारुतेऽस्मिन् मा सौरभलोभमम्बुजिनि मंस्थाः ।
लोकानामेव मुदे महितोऽप्यात्मासुनार्थितां नीतः ॥१७॥

गुञ्जति मञ्जु मिलिन्दे मा मालति मौनमुपयासीः ।
शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥१८॥

यैस्त्वं गुणगणवानपि सतां द्विजिह्वैरसेव्यतां नीतः ।
तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥१९॥

अपनीतपरिमलान्तरकथे पदं न्यस्य देवतरुकुसुमे ।
पुष्पान्तरेऽपि गन्तुं वाञ्छसि चेद् भ्रमर धन्योऽसि ॥२०॥

तटिनि चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः ।
शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकादानम् ॥२१॥

पत्रफलपुष्पलक्ष्म्या कदाप्यदृष्ट वृत च खलु शूकैः ।
उपसर्पेम भवन्त वर्बुर वद कस्य लोभेन ॥२२॥

एकस्त्व गहनेऽस्मिन कोकिल न कल कदाचिदपि कुर्या ।
साजात्यशङ्कयामी न त्वा निघ्नन्ति निर्दया काका ॥२३॥

तरुकुलसुषमापहरा जनयन्ती जगति जीवजातार्तिम ।
केन गुणेन भवानीतात हिमानीमिमा वहसि ॥२४॥

कलभ तवान्तिकमागतमलिमेन मा कदाप्यवज्ञासी ।
अपि दानसुन्दराणा द्विपधुर्याणामय शिरोधार्य ॥२५॥

अमरतरुकुसुमसौरभसेवनसपूर्णसकलकामस्य ।
पुष्पान्तरसेवेय भ्रमरस्य विडम्बना महती ॥२६॥

पृष्टा खलु परपुष्टा परितो दृष्टाश्च विटपिन सर्वे ।
माकन्द न प्रपेदे मधुपेन तवोपमा जगति ॥२७॥

तोयैरल्पैरपि करुणया भीमभानौ निदाघे
मालाकार व्यरचि भवता या तरोरस्य पुष्टि ।
सा किं शक्या जनयितुमिह प्रावृषेण्येन वारा
धारासारानपि विकिरता विश्वतो वारिदेन ॥२८॥

आरामाधिपतिर्विवेकविकलो नून रसा नीरसा
वात्याभि परुषीकृता दश दिशश्चण्डातपो दु सह ।
एव धन्वनि चम्पकस्य सकले सहारहेतावपि
त्व सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा ॥२९॥

न यत्र स्थेमान दधुरतिभयभ्रान्तनयना
गलद्दानोद्रेकभ्रमदलिकदम्बा करटिन ।
लुठन्मुक्ताभारे भवति परलोक गतवतो
हरेरद्य द्वारे शिव शिव शिवाना कलकल ॥३०॥

दधान प्रेमाण तरुषु समभावेन विपुला
न मालाकारोऽसावकृत करुणा बालबकुले
अय तु द्रागुद्यत्कुसुमनिकराणा परिमलै-
र्दिगन्तानातेने मधुपकुलझङ्कारभरितान् ॥३१॥

मूल स्थूलमतीव बन्धनदृढ शाखा शत मासला
वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव ।

एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरं
ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मरः ॥३२॥

ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यश्चातक-
स्त्वां ध्यायन् घन वासरान् कथमपि द्राघीयसो नीतवान् ।
दैवाल् लोचनगोचरेण भवता तस्मिन्निदानीं यदि
स्वीचक्रे करकानिपातनकृपा तत् कं प्रति ब्रूमहे ॥३३॥

दवदहनजटालज्वालजालाहतानां
परिगलितलतानां म्लायतां भूरुहाणाम् ।
अयि जलधर शैलश्रेणिशृङ्गेषु तोयं
वितरसि बहु कोऽयं श्रीमदस्तावकीनः ॥३४॥

शृण्वन् पुरः परुषगर्जितमस्य हन्त
रे पान्थ विह्वलमना न मनागपि स्याः ।
विश्वार्तिवारणसमर्पितजीवनोऽयं
नाकर्णितः किमु सखे भवताम्बुवाहः ॥३५॥

सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं तु लोकोत्तरं
कीर्तिः किं च दिगङ्गनाङ्गणगता किं त्वेतदेकं शृणु ।
सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरान्
उज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली ॥३६॥

नापेक्षा न च दाक्षिण्यं न प्रीतिर्न च सङ्गतिः ।
तथापि हरते तापं लोकानामुन्नतो घनः ॥३७॥

समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं
निवासः पद्मायाः सुरहृदयहारी परिमलः ।
गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव
द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम् ॥३८॥

साकं ग्रावगणैर्लुठन्ति मणयस्तीरेऽर्कबिम्बोपमा
नीरे नीरचरैः समं स भगवान् निद्राति नारायणः ।
एवं वीक्ष्य तवाविवेकमपि च प्रौढिं परामुन्नतेः
किं निन्दाम्यथवा स्तवानि कथय क्षीरार्णव त्वामहम् ॥३९॥

किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते ।
सलिलमपि यन् न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥४०॥

इयत्यां संपत्तावपि च सलिलानां त्वमधुना
न तृष्णामार्तानां हरसि यदि कासार सहसा ।

निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरान
कृशीभूत केषामहह परिहर्तासि खलु ताम ॥४१॥

अयि रोषमुरीकरोषि नो चेत
किमपि त्वा प्रति वारिधे वदाम ।
जलदेन तवार्थिना विमुक्ता
न्यपि तोयानि महान न हा जहासि ॥४२॥

न वारयामो भवतीं विशन्तीं वर्षानदि स्रोतसि जह्नुजायाः ।
न युक्तमेतत तु पुरो यदस्यास्तरङ्गभङ्गान प्रकटीकरोषि ॥४३॥

पौलोमीपतिकानने विलसता गीर्वाणभूमीरुहा
यनाघ्रातसमुज्झितानि कुसुमान्याजघ्रिरे निर्जरै ।
तस्मिन्नद्य मधुव्रते विधिवशान माध्वीकमाकाङ्क्षति
त्व चेदञ्चसि लोभमम्बुज तदा किं त्वा प्रति ब्रूमहे ॥४४॥

भुक्ता मृणालपटली भवता निपीता-
न्यम्बूनि यत्र नलिनानि निषवितानि ।
रे राजहस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकार ॥४५॥

प्रारम्भ कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरी-
पुञ्ज मञ्जुलगुञ्जितानि रचयस्तानातनोरुत्सवान ।
तस्मिन्नद्य रसालशाखिनि दशा दैवात कृशामञ्चति
त्व वेन मुञ्चसि चञ्चरीक विनय नीचस्त्वदयोऽस्ति क ॥४६॥

एणीगणषु गुरुगर्वनिमीलिताक्ष
किं कृष्णसार खलु खर्लसि काननेऽस्मिन ।
सीमामिमा कलय भिन्नकरीन्द्रकुम्भ-
मुक्तामयीं हरिविहारवसुधरायाः ॥४७॥

जठरज्वलनज्वलताप्यपगतशङ्क समागतापि पुर ।
करिणामरिणा हरिणा हरिणाली हन्यता नु कथम ॥४८॥

येन भिन्नकरिकुम्भविस्खलन्मौक्तिकावलिभिरञ्चिता मही ।
अद्य तेन हरिणान्तिक कथ कथ्यता नु हरिणा पराक्रम ॥४९॥

स्थितिं नो रे दध्या क्षणमपि मदान्धेक्षण सखे
गजश्रेणीनाथ त्वमिह जटिलाया वनभुवि ।
असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहा-
गुरुग्रावग्राम स्वपिति गिरिगर्भे हरिपति ॥५०॥

गिरिगह्वरेषु गुरुगर्वगुम्फितो
  गजराजपोत न कदापि संचरेः ।
यदि बुध्यते हरिशिशुः स्तनंधयो
  भविता करेणुपरिशेषिता मही ॥५१॥

निसर्गादारामे तरुकुलसमारोपसुकृती
  कृती मालाकारो बकुलमपि कुत्रापि निदधे ।
इदं को जानीते यदयमिह कोणान्तरगतो
  जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम् ॥५२॥

यस्मिन् खेलति सर्वतः परिचलत्कल्लोलकोलाहलै-
  र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे ।
सोऽयं तुङ्गतिमिङ्गिलाङ्गकवलीकारक्रियाकोविदः
  क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥५३॥

लूनं मत्तगजैः कियत् कियदपि च्छिन्नं तुषारार्दितैः
  शिष्टं ग्रीष्मजभीष्मभानुकिरणैर्भस्मीकृतं काननम् ।
एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो
  हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते ॥५४॥

स्वर्लोकस्य शिखामणिः सुरतरुग्रामस्य धामाद्भुतं
  पौलोमीपुरुहूतयोः परिणतिः पुण्यावलीनामसि ।
सत्यं नन्दन किं त्विदं सहृदयैर्नित्यं विधिः प्रार्थ्यते
  त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥५५॥

स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने
  चञ्चूकोटिविपाटितारपुटो यास्याम्यहं पञ्जरात् ।
एवं कीरवरे मनोरथमयं पीयूषमास्वादय-
  त्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥५६॥

रे चाञ्चल्यजुषो मृगाः श्रितनगाः कल्लोलमालाकुला-
  मेतामम्बुधिकामिनीं व्यवसिताः संगाहितुं वा कथम् ।
अत्रैवोच्छलदम्बुनिर्भरमहावर्तैः समावर्तितो
  यद् ग्रावेव रसातलं पुनरसौ यातो गजग्रामणीः ॥५७॥

पिब स्तन्यं पोत त्वमिह मददन्तावलधिया
  दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान् ।
त्रयाणां लोकानामपि हृदयतापं परिहर-
  न्नयं धीरं धीरं ध्वनति नवनीलो जलधरः ॥५८॥

धीरध्वनिभिरल ते नीरद मे मासिको गर्भ ।
उन्मदवारणबुद्ध्या मध्येजठर समुच्छलति ॥५९॥

वेतण्डगण्डकण्डूतिपाण्डित्यपरिपन्थिना ।
हरिणा हरिणालीषु कथ्यता क पराक्रम ॥६०॥

नीरान् निर्मलतो जनिर्मधुरता रामामुखस्पर्धिनी
वास किञ्च हरे करे परिमलो गीर्वाणचेतोहर ।
सर्वस्व तदहो महाकविगिरा कामस्य चाम्भोरुह
त्व चेत प्रीतिमुरीकरोषि मधुपे तत त्वा किमाचक्ष्महे ॥६१॥

लीलामुकुलितनयन कि सुखशयन समातनुषे ।
परिणामविषमहरिणा करिनायक वर्धते वैरम ॥६२॥

विदुषा वदनाद् वाच सहसा यान्ति नो बहि ।
याताश्चेन्न न पराञ्चन्ति द्विरदाना रदा इव ॥६३॥

औदार्य भुवनत्रयेऽपि विदित सम्भूतिरम्भोनिधे-
र्वासो नन्दनकानने परिमलो गीर्वाणचेतोहर ।
एव दातृगुरोर्गुणा सुरतरो सर्वेऽपि लोकोत्तरा
स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥६४॥

एको विश्वसता हराम्यपघृण प्राणानह प्राणिना-
मित्येव परिचिन्त्य मात्ममनसि व्याधानुताप कृथा ।
भूपाना भवनेषु कि च विमलक्षत्रेषु गूढाशया
साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षा नरा ॥६५॥

विश्वास्य मधुरवचनै साधून् ये वञ्चयन्ति नम्रतमा ।
तानपि दधासि मात काश्यपि यातस्तवापि च विवेक ॥६६॥

अन्या जगद्धितमयी मनस प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरार्तहृद्या
विद्यावता सकलमेव गिरा दवीय ॥६७॥

आपद्गत खलु महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहनमध्यगत समन्तात्
लोकोत्तर परिमल प्रकटीकरोति ॥६८॥

विश्वाभिरामगुणगौरवगुम्फितानां
 रोषोऽपि निर्मलधियां रमणीय एव ।
लोकंपृणैः परिमलैः परिपूरितस्य
 काश्मीरजस्य कटुतापि नितान्तरम्या ॥६९॥

लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो
 विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत् पामराः ।
अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः
 सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥७०॥

गीर्भिर्गुरूणां परुषाक्षराभि-
 स्तिरस्कृता यान्ति नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां
 न जातु मौलौ मणयो वसन्ति ॥७१॥

वहति विषधरान् पटीरजन्मा शिरसि मषीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥७२॥

सत्पूरुषः खलु हिताचरणैरमन्द-
 मानन्दयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारै-
 रिन्दुर्विकासयति कैरविणीकुलानि ॥७३॥

परार्थव्यासङ्गादुपजहदथ स्वार्थपरता-
 मभेदैकत्वं यो वहति गुणभूतेषु सततम् ।
स्वभावाद् यस्यान्तः स्फुरति ललितोदात्तमहिमा
 समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ॥७४॥

वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥७५॥

अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥७६॥

उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् ।
मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥७७॥

घनान्ते खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या ।
अहो सेयं सीता दशवदननीता हलरदैः
परीता रक्षोभिः श्रयति विवशा कामपि दशाम् ॥७८॥

पुरो गीर्वाणाना निजभुजबलाहोपुरुषिका–
  महो कारकार पुरभिदि शर समुखयत ।
स्मरस्य स्वर्बालानयनसुमभालार्चनपद
  वपु सद्यो भालानलभसितजालास्पदमभूत ॥७९॥

युक्त सभाया खलु मर्कटाना शाखास्तरूणा मृदुलासनानि ।
सुभाषित चीत्कृतिरातिथेयी दन्तैर्नखाग्रैश्च विपाटितानि ॥८०॥

किं तीर्थं हरिपादपद्मभजन किं रत्नमच्छा मति
  किं शास्त्र श्रवणेन यस्य गलति द्वैतान्धकारोदय ।
किं मित्र सततोपकाररसिक तत्त्वावबोध सख
  क शत्रुर्वद खेददानकुशलो दुर्वासनाना चय ॥८१॥

निष्णातोऽपि च वेदान्ते साधुत्व नैति दुर्जन ।
चिर जलनिधौ मग्नो मैनाक इव मार्दवम् ॥८२॥

नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम ।
शाखिनोऽन्ये विराजन्ते खण्डयन्ते चन्दनद्रुमा ॥८३॥

परोपसर्पणानन्तचिन्तानलशिखाशतै ।
अचुम्बितान्त करणा साधु जीवन्ति पादपा ॥८४॥

शून्येऽपि च गुणवत्तामातन्वान स्वकीयगुणजालै ।
विवराणि मुद्रयन् द्रागूर्णायुरिव सुजनो जयति ॥८५॥

खल सज्जनकार्पासरक्षणैकहुताशन
परदुखाग्निशमनो मारुत केन वर्ण्यताम ॥८६॥

परगुह्यगुप्तिनिपुण गुणमयमखिलै समीहित नितराम ।
ललिताम्बरमिव सज्जनमाखव इव दूषयन्ति खला ॥८७॥

यश सौरभ्यलशुन शान्तिशैत्यहुताशन ।
कारुण्यकुसुमाकाश खल सज्जनदुखद ॥८८॥

धत्ते भर कुसुमपत्रफलावलीना
  घर्मव्यथा वहति शीतभवा रुज च ।
यो देहमर्पयति चान्यसुखस्य हेतो–
  स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥८९॥

हालाहल खलु पिपासति कौतुकेन
  कालानल परिचुचुम्बिषति प्रकामम् ।

व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं तनुते मनीषाम् ॥९०॥

दीनानामिह परिहाय शुष्कसस्या–
न्यौदार्यं प्रकटयतो महीधरेषु ।
औन्नत्यं विपुलमवाप्य दुर्मदस्य
ज्ञातोऽयं जलधर तावको विवेकः ॥९१॥

गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् ।
तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥९२॥

व्योम्नि बीजाकुरुते चित्रं निर्माति सुन्दरं पवने ।
रचयति रेखाः सलिले यस्तु खले चरति सत्कारम् ॥९३॥

हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ।
लेढि जिघ्रति संक्षिप्य करोत्युन्नतमासनम् ॥९४॥

मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि ।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥९५॥

स्वार्थं धनानि धनिकात् प्रतिगृह्णतो य–
दास्यं भजेन् मलिनतां किमिदं विचित्रम् ।
गृह्णन् परार्थमपि वारिनिधेः पयोऽपि
मेघोऽयमेति सकलोऽपि च कालिमानम् ॥९६॥

जनकः सानुविशेषो जातिः काष्ठं भुजङ्गमैः सङ्गः ।
स्वगुणैरेव पटीरज यातोऽसि तथापि महिमानम् ॥९७॥

कस्मै हन्त फलाय सज्जन गुणग्रामार्जने सज्जसि
स्वात्मोपस्करणाय चेन् मम वचः पथ्यं समाकर्णय ।
ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृता–
स्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्तनम् ॥९८॥

धूमायिता दश दिशो दलितारविन्दा
देहं दहन्ति दहना इव गन्धवाहाः ।
त्वामन्तरेण मृदुताम्रदलाम्र मञ्जु–
गुञ्जन्मधुव्रत मधो किल कोकिलस्य ॥९९॥

भिन्ना महागिरिशिलाः करजाग्रजाग्र–
दुद्दामशौर्यनिकरैः करटिभ्रमेण ।
दैवे पराचि करिणामरिणा तथापि
कुत्रापि नापि खलु हा पिशितस्य लेशः ॥१००॥

गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि ।
हरिशिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम् ॥१०१॥

किमहं वदामि खल दिव्यमते गुणपक्षपातमभितो भवतः ।
गुणशालिनो निखिलसाधुजनान् यदहर्निशं न खलु विस्मरसि ॥१०२॥

रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि ।
अथवालं पापात्मन् कृतया कथयापि ते हतया ॥१०३॥

आनन्दमृगदावाग्निः शीलशाखिमदद्विपः ।
ज्ञानदीपमहावायुरयं खलसमागमः ॥१०४॥

खलास्तु कुशलाः साधुहितप्रत्यूहकर्मणि ।
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥१०५॥

वदने विनिवेशिता भुजङ्गी पिशुनानां रसनामिषेण धात्रा ।
अनया कथमन्यथावलीढा न हि जीवन्ति जना मनागमन्त्राः ॥१०६॥

कृतं त्वयोन्नतं कृत्यमर्जितं चामलं यशः ।
यावज्जीवं सखे तुभ्यं दास्यामो विपुलाशिषः ॥१०७॥

अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् ।
अपि च मानसमम्बुनिधिर्यशो विमलशारदचन्द्रिरचन्द्रिका ॥१०८॥

निर्गुणः शोभते नैव विपुलाडम्बरोऽपि ना ।
आपातरम्यपुष्पश्रीशोभितः शाल्मलिर्यथा ॥१०९॥

पङ्कैर्विना सरो भाति सदः खलजनैर्विना ।
कटुवर्णैर्विना काव्यं मानसं विषयैर्विना ॥११०॥

तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥१११॥

सरजस्कां पाण्डुवर्णां कण्टकप्रकरान्विताम् ।
केतकीं सेवसे हन्त कथं रोलम्ब निस्त्रप ॥११२॥

यथा तानं विना रागो यथा मानं विना नृपः ।
यथा दानं विना हस्ती तथा ज्ञानं विना यतिः ॥११३॥

सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् ।
आमोदो न हि कस्तूर्याः शपथेन विभाव्यते ॥११४॥

अयि बत गुरुगर्वं मा स्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥११५॥

दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति ।
भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥

अविरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् ।
आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥११७॥

व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयन्त्रपातिरेकात् ।
आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥११८

मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते ।
सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ न हि दृष्टपूर्वा ॥११९॥

उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते ।
राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥१२०॥

अयाचितः सुखं दत्ते याचितश्च न यच्छति ।
सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥१२१॥

खण्डितानेत्रकञ्जालिमञ्जुरञ्जनपण्डिताः ।
मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भानवः ॥१२२॥

१

---

# (७) शृङ्गारविलासः

न मनागपि राहुरोषशङ्का
  न कलङ्कानुगमो न पाण्डुभावः ।
उपचीयत एव कापि शोभा
  परितो भामिनि ते मुखस्य नित्यम् ॥१॥

नितरां परुषा सरोजमाला
  न मृणालानि विचारपेशलानि ।
यदि कोमलता तवाङ्गकाना-
  मथ का नाम कथापि पल्लवानाम् ॥२॥

स्वेदाम्बुसान्द्रकणशालिकपोलपाली-
  दोलायितश्रवणकुण्डलमण्डनीया ।
आनन्दमङ्कुरयति स्मरणेन कापि
  रम्या दशा मनसि मे मदिरेक्षणायाः ॥३॥

कस्तूरिकातिलकमालि विधाय सायं
  स्मेरानना सपदि शीलय सौधमौलिम् ।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
  मुल्लासयन्तु परितो हरितो मुखानि ॥४॥

तन्मञ्जु मन्दहसितं श्वसितानि तानि
  सा वै कलङ्कविधुरा मधुराननश्री ।
अद्यापि मे हृदयमुन्मदयन्ति हन्त
  सायंतनाम्बुजसहोदरलोचनायाः ॥५॥

प्रातस्तरां प्रणमने विहिते गुरूणा-
  माकर्ण्य वाचममलां भव पुत्रिणीति ।
नेदीयसि प्रियतमे परमप्रमोद-
  पूर्णादरं दयितया दधिरे दृगन्ताः ॥६॥

गुरुजनभयमद्विलोकनान्तः समुदयदाकुलभावमावहन्त्याः ।
दरदलदरविन्दसुन्दरं हा हरिणदृशो नयनं न विस्मरामि ॥७॥

बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण ।
अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्याः ॥८॥

कपोलपालिं तव तन्वि मन्ये
लावण्यधन्ये दिशमुत्तरास्याम् ।
विभाति यस्यां ललितालकायां
मनोहरा वैश्रवणस्य लक्ष्मीः ॥९॥

नीवीं नियम्य शिथिलामुषसि प्रकाश-
मालोक्य वारिजदृशः शयनं जिहासोः ।
नैवावरोहति कदापि च मानसान् मे
नाभेः प्रभा सरसिजोदरसोदरायाः ॥१०॥

आलीषु केलीरभसेन बाला मुहुर्ममालापमुपालपन्ती ।
आराद्रुपाकर्ण्य गिरं मदीयां सौदामिनीयां सुषमामयासीत् ॥११॥

मुधैव मन्तुं परिकल्प्य गन्तुं मृषैव रोषादुपजल्पतो मे ।
उदश्रुचञ्चन्नयना नताङ्गी गिरं न कां कामुररीकरोति ॥१२॥

तदवधि कुशली पुराणशास्त्र-
स्मृतिशतचारुविचारजो विवेकः ।
यदवधि न पदं दधाति चित्ते
हरिणकिशोरदृशो दृशोर्विलासः ॥१३॥

आगतः पतिरितीरितं जनैः शृण्वती चकितमेत्य देहलीम् ।
कौमुदीव शिशिरीकरिष्यते लोचने मम कदा मृगेक्षणा ॥१४॥

अवधौ दिवसावसानकाले भवनद्वारि विलोचने दधाना ।
अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव ॥१५॥

वक्षोजाग्रं पाणिनामृश्य दूरं
यातस्य द्रागाननाब्जं प्रियस्य ।
शोणाग्राभ्यां भामिनी लोचनाभ्यां
जोषं जोषं जोषमेवावतस्थे ॥१६॥

गुरुभिः परिवेल्लितापि गण्डस्थलकण्डूयनचारुकैतवेन ।
दरदर्शितहेमबाहुनाला मयि बाला नयनाञ्चलं चकार ॥१७॥

गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम् ।
दरकुण्डलताण्डवं नतभ्रूलतिकं मामवलोक्य घूर्णितासीत् ॥१८॥

विनये नयनारुणप्रसाराः प्रणतौ हन्त निरन्तराश्रुधाराः ।
अपि जीवितसंशयः प्रयाणे नहि जाने हरिणाक्षि केन तुष्येः ॥१९॥

अकरुण मृषाभाषासिन्धो विमुञ्च ममाञ्चलं
तव परिचितः स्नेहः सम्यङ् मयेत्यभिधायिनीम् ।
अविरलगलद्वाष्पा तन्वीं निरस्तविभूषणा
क इह भवतीं भद्रे निद्रे विना विनिवेदयेत् ॥२०॥

तीरे तरुण्या वदनं सहासं
नीरे सरोजं च मिलद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा
मरन्दलुब्धालिकिशोरमाला ॥२२॥

वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी ।
अंसदेशविनिवेशितां क्षणादाचकर्ष निजबाहुवल्लरीम् ॥२३॥

दरानमत्कंधरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम् ।
अनल्पनिःश्वासभरालसाङ्गं स्मरामि सङ्गं चिरमङ्गनायाः ॥२३॥

रोषावेशान् निर्गतं धामयुग्मादेत्य द्वारं कांचिदाख्यां गृणन्तम् ।
मामाज्ञायैवाययौ कातराक्षी मन्दं मन्दं मन्दिरादिन्दिरेव ॥२४॥

हृदये कृतशैवलानुषङ्गा मुहुरङ्गानि यतस्ततः क्षिपन्ती ।
प्रियनामपरे मुखे सखीनामतिदीनामियमादधाति दृष्टिम् ॥२५॥

इत एव निजालयं गताया वनिताया गुरुभिः समावृतायाः ।
परिवर्तितकंधरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि ॥२६॥

कथय कथमिवाशा जायतां जीविते मे
मलयभुजगवान्ता वान्ति वाताः कृतान्ताः ।
अयमपि खलु गुञ्जन् मञ्जु माकन्दमौलौ
चुलुकयति मदीयां चेतनां चञ्चरीकः ॥२७॥

निरुध्य यान्तीं तरसा कपोतीं कूजत्कपोतस्य पुरो दधाने ।
मयि स्मितार्द्रं वदनारविन्दं सा मन्दमन्दं नमयाबभूव ॥२८॥

तिमिरं हरन्ति हरितां पुरःस्थितं
तिरयन्ति तापमथ तापशालिनाम् ।
वदनत्विषस्तव चकोरलोचने
परिमुद्रयन्ति सरसीरुहश्रियः ॥२९॥

कुचकलशयुगान्तर्मामकीनं नखाङ्कं
सपुलकतनु मन्दं मन्दमालोकयन्ती ।

विनिहितवदनं मां वीक्ष्य बाला गवाक्षे
चकिततनतताङ्गी सद्म सद्यो विवेश ॥३०॥

विधाय सा मद्वदनानुकूलं कपोलमूलं हृदये शयाना।
तन्वी तदानीमतुलां बलारेः साम्राज्यलक्ष्मीमधरीचकार ॥३१॥

मुहुरर्थितयाद्य निद्रया मे
बत यामे चरमे निवेदितायाः।
चिबुकं सुदृशो मृशामि यावत्
मयि तावत् मुदिरोऽपि निर्दयोऽभूत् ॥३२॥

श्रुतिशतमपि भूयः शीलितं भारतं वा
विरचयति तथा नो हन्त सन्तापशान्तिम्।
अयि सपदि यथायं केलिविश्रान्तकान्ता–
वदनकमलवल्गत्कान्तिसान्द्रो नकारः ॥३३॥

लवलीं तव लीलया कपोले
कवलीकुर्वति कोमलत्विषा।
परिपाण्डुरपुण्डरीकखण्डे
परिपेतुः परितो महाशयः ॥३४॥

यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः।
संकुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः ॥३५॥

अधिरोप्य हरस्य हन्त चापं
परितापं प्रशमय्य बान्धवानाम्।
परिणेष्यति वा युवा न वायं
निरपायं मिथिलाधिनाथपुत्रीम् ॥३६॥

भुजपञ्जरे गृहीता नवपरिणीता वरेण रहसि वधूः।
तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम् ॥३७॥

उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता।
तदपि न हा विधुवदना मानससदनाद् बहिर्याति ॥३८॥

अकरुणहृदय प्रियतम मुञ्चामि त्वामितः परं नाहम्।
इत्यालपति कराम्बुजमादायालीजनस्य विकला सा ॥३९॥

लोभाद् वराटिकानां विक्रेतुं तक्रमक्रममटन्त्या।
लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥४०॥

रूपारुचि निरसितु रसयन्त्या हरिमुखस्य लावण्यम् ।
शिव शिव सुदृश सकले जाता सकलेवरे जगत्यरुचि ॥४१॥

किं जल्पसि मुग्धतया हन्त ममाङ्ग सुवर्णमिति ।
तद् यदि पतति हुताशे तदा हुताशे तुला तवारोहेत ॥४२॥

औत्सुक्यात परिमिलता त्रपया सकोचमञ्चता च मुहु ।
नवसगमयोर्यूनोर्नयनानामुत्सवो जयति ॥४३॥

गरिमाणमर्पयित्वा लघिमान कुचतटात कुरङ्गदृशाम ।
स्वीकुर्वते नमस्ते यूना धैर्याय निर्विवेकाय ॥४४॥

न्यञ्चति वयसि प्रथमे समुदञ्चति किञ्च तरुणिमनि सुदृश ।
दधति स्म मधुरिमाण वाचो गतयश्च विभ्रमाश्च भृशम् ॥४५॥

नि सीमशोभासौभाग्य नताङ्ग्या नयनद्वयम ।
अन्योन्यालोकनानन्दविरहादिव चञ्चलम ॥४६॥

गुरुमध्ये हरिणाक्षी मार्तिकशकलैर्निहन्तुकाम माम ।
रदयन्त्रितरसनाग्र तरलितनयन निवारयाचक्रे ॥४७॥

नयनाञ्चलावमर्शं या न कदाचित पुरा सेहे ।
आलिङ्गितापि जोष तस्थौ सा गन्तुकेन दयितेन ॥४८॥

मानपराग्वदनापि प्रिया शयानेव दयितकरकमले ।
उद्वेल्लद्भुजभलसग्रीवाबन्ध कपोलमावर्त्ते ॥४९॥

लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमना ।
कस्तूरीतिलकमिषादयमलिकेऽलिस्तवोल्लसति ॥५०॥

अधिरजनि प्रियसविधे कथमपि सवेशिता गुरुभि ।
किं भवितेति सशङ्क पङ्कजनयना परामृशति ॥५१॥

चिन्तामीलितमानसो मनसिज सख्यो विहीनप्रभा
प्राणेश प्रणयाकुल पुनरसावास्ता समस्ता कथा ।
एतत त्वा विनिवेदयामि मम चेदुक्ति हिता मन्यसे
मुग्धे मा कुरु मानमाननमिद राकापतिर्जेष्यति ॥५२॥

अलकतुं कर्णौ भृशमनुभवन्त्या नवरुज
ससीत्कार तिर्यग्वलितवदनाया मृगदृश ।
कराब्जव्यापारानतिसुकृतसारान् रसयतो
जनु सर्वश्लाघ्य जयति ललितोत्तस भवत ॥५३॥

आयातैव निशा निशापतिकरैः पूर्णं दिशामन्तरं
भामिन्यो भवनेषु भूषणगणैरङ्गान्यलंकुर्वते ।
मुग्धे मानमपाकरोषि न मनागद्यापि रोषेण ते
हा हा बालमृणालतोऽप्यतितरां तन्वी तनुः क्षाम्यति ॥५४॥

वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने
केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजम् ।
निःश्वासग्लपिताधरं परिपतद्बाष्पार्द्रवक्षोरुहा
बाला लोलविलोचना शिव शिव प्राणेशमालोकते ॥५५॥

दारिद्र्यं भजते कलानिधिरयं राकाधुना ग्लायति
स्वैरं कैरवकाननेषु परितो मालिन्यमुन्मीलति ।
द्योतन्ते हरिदन्तराणि सुहृदां वृन्दं समानन्दति
त्वं चेदञ्चसि काञ्चनाङ्गि वदनाम्भोजे विकासश्रियम् ॥५६॥

पाटीरद्रुभुजङ्गपुङ्गवमुखायाता इवातापिनो
वाता वान्ति दहन्ति लोचनममी ताम्रा रसालद्रुमाः ।
एते हन्त किरन्ति कूजितमयं हालाहलं कोकिला
बाला बालमृणालकोमलतनुः प्राणान् कथं रक्षतु ॥५७॥

आयातैव निशा मनो मृगदृशामुन्निद्रमातन्वती
मानो मे कथमेष संप्रति निरातङ्कं हृदि स्थास्यति ।
ऊहापोहमिमं सरोजनयना यावद् विधत्तेतरां
तावत् कामनृपातपत्रसुषमं बिम्बं बभासे विधोः ॥५८॥

प्रभातसमयप्रभां प्रणयिनि ह्नुवाना रसा-
दमुष्य निजपाणिना दृशममीलयल् लीलया ।
अयं तु खलु पद्मिनीपरिमलालिपाटच्चरैं
रवेरुदयमध्यगादधिकचारु तैर्मारुतैः ॥५९॥

विदूरादाश्चर्यस्तिमितमथ किंचित्परिचया-
दुदञ्चच्चाञ्चल्यं तदनु परितः स्फारितरुचि ।
गुरूणां संघातं सपदि मयि याते समजनि
त्रपाघूर्णत्तारं नयनमिह सारङ्गजदृशः ॥६०॥

कपोलावुन्मीलत्पुलकनिकुरम्बौ मयि मनाक्
स्पृशत्यन्तःस्मेरस्तबकितमुखाम्भोरुहरुचः ।
कथंकारं शक्याः परिगदितुमिन्दीवरदृशो
दलद्द्राक्षानिर्यद्रसभरसपक्षा भणितयः ॥६१॥

राजानं जनयाबभूव सहसा जैवातृकं त्वां तु यः
सोऽयं कुण्ठितसर्वशक्तिनिकरो जातो जरातो विधिः ।
सप्रत्युम्मदखञ्जरीटनयनावक्त्राय नित्यश्रिये
दाता राज्यमखण्डमस्य जगतो धाता नवो मन्मथः ॥६२॥

आविर्भूता यदवधि मधुस्यन्दिनी नन्दसूनोः
कान्तिः काचिन्निखिलनयनाकर्षणे कार्मणज्ञा ।
श्वासो दीर्घस्तदवधि मुखे पाण्डिमा गण्डमूले
शून्या वृत्तिः कुलमृगदृशां चेतसि प्रादुरासीत् ॥६३॥

प्रसङ्गे गोपानां गुरुषु महिमानं यदुपते-
रुपाकर्ण्य स्विद्यत्पुलकितकपोला कुलवधूः ।
विषज्वालाजालं झटिति वमतः पन्नगपते-
र्फणायां साश्चर्यं कथयतितरां ताण्डवविधिम् ॥६४॥

कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया ।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः ॥६५॥

शयिता शैवलशयने सुषमाशेषा नवेन्दुलेखेव ।
प्रियमागतमपि सविधं सत्कुरुते मधुरवीक्षणेनैव ॥६६॥

विरहेण विकलहृदया विलपन्ती दयितं दयितेति ।
आगतमपि सा सविधं परिचयहीनेव वीक्षते बाला ॥६७॥

अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी ।
तनुरप्रतिमा च सुभ्रुवो न विधेरस्य कृतिं विवक्षति ॥६८॥

व्यायस्तं लपति क्षणं क्षणमहो मौनं समालम्बते
सर्वस्मिन्विदधाति किं च विषये दृष्टिं निरालम्बनाम् ।
श्वासं दीर्घमुरीकरोति न मनागङ्गेषु धत्ते धृतिं
वैदेहीविरहव्यथाविकलितो हा हन्त लङ्केश्वरः ॥६९॥

उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलललनाचूडामणिशासनेन मदनेन ॥७०॥

इदमप्रतिमं पश्य सरः सरसिजैर्वृतम् ।
सखे मा जल्प नारीणां नयनानि दहन्ति माम् ॥७१॥

मुञ्चसि नाद्यापि रुषं भामिनि मुदिरालिरुदियाय ।
इति सुदृशः प्रियवचनैरपायि नयनाब्जकोणशोणरुचिः ॥७२॥

आलोक्य सुन्दरि मुखं तव मन्दहासं
नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः ।
किं चासिताक्षि मृगलाञ्छनसम्भ्रमेण
चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥७३॥

स्मितं नैतत् किन्तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते को वा कुसुममिदमुद्यत्परिमलम् ।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत् फलयुगं
लता रम्या सेयं भ्रमरकुलनम्या न रमणी ॥७४॥

संग्रामाङ्गणसंमुखाहतकियद्विश्वंभराधीश्वर–
व्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा ।
अङ्गारप्रखरैः करैः कवलयन्नेतन् महीमण्डलं
मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ॥७५॥

श्यामं सितं च सुदृशो न दृशोः स्वरूपं
किं तु स्फुटं गरलमेतदयामृतं च ।
नो चेत् कथं निपतनादनयोस्तदैव
मोहं मुदं च नितरां दधते युवानः ॥७६॥

अलिर्मृगो वा नेत्रं वा यत्र किंचिद् विभासते ।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ॥७७॥

दयिते रदनत्विषां मिषा–
दयि तेऽमी विलसन्ति केसराः ।
अपि चालकवेषधारिणो
मकरन्दस्पृहयालवोऽलयः ॥७८॥

अनिशं नयनाभिरामया
रमया संमदिनो मुखस्य ते ।
निशि निःसरदिन्दिरं कथं
तुलयामः कलयापि पङ्कजम् ॥७९॥

अङ्गैः सुकुमारतरैः सा कुसुमानां श्रियं हरति ।
विकलयति कुसुमबाणो बाणालीभिर्मम प्राणान् ॥८०॥

खिद्यति सा पथि यान्ती कोमलचरणा नितम्बभारेण ।
खिद्यामि हन्त परितस्तद्रूपविलोकनेन विकलोऽहम् ॥८१॥

मयुरागमनोन्मुखे मुरारा-
वसुभारार्तिभृता व्रजाङ्गनानाम् ।
प्रलयज्वलनायते स्म राका
भवनाकाशमजायताम्बुराशि ॥८२॥

केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितै
सुप्ताया सरुष सरोरुहदृश सव्रीजन कुर्वन ।
जानन्त्याप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि
श्रान्तासीत्यभिधाय वक्षसि तया पाणिर्ममासञ्जित ॥८३॥

मान्यर्यमाप गमन सह शैशवेन
रक्त सहैव मनसाधरबिम्बमासीत ।
किं चाभवन् मृगकिशोरदृशो नितम्ब
सर्वाधिको गुरुरय सह मन्मथेन ॥८४॥

श्वासोऽनुमानवेद्य शीतान्यङ्गानि निश्चला दृष्टि ।
तस्या सुभग कथेय तिष्ठतु तावत कथान्तर कथय ॥८५॥

पाणौ कृत पाणिरिलासुताया
सस्वेदकम्पो रघुनन्दनेन ।
हिमाम्बुगङ्गानिलविह्वलस्य
प्रभातपद्मस्य बभार शोभाम ॥८६॥

अरुणमपि विद्रुमद्रु मृदुलतर चापि पल्लव बाले ।
अधरीकरोति नितरा तवाधरो मधुरिमातिशयात ॥८७॥

नयन वहतां नु खञ्जनानामिह नानाविधमङ्गभङ्गभाग्यम् ।
मुखमेतु तुला कथ सुशोभ सुदृशो भङ्गुरसम्पदाम्बुजेन ॥८८॥

सुदृशो जितरत्नजालया सुरतान्तश्रमबिन्दुमालया ।
अलिकेन च हेमकान्तिना विदधे कापि रुचि परस्परम् ॥८९॥

परपूरुषदृष्टिपातवज्राहतिभीता हृदय प्रियस्य सीता ।
अविशत परकामिनीभुजङ्गीभयत सत्वरमेव सोऽपि तस्या ॥९०॥

जम्बीरश्रियमतिलङ्घ्य लीलयैव
व्यानम्रीकृतकमनीयहेमकुम्भौ ।
नीलाम्भोरुहनयनेऽधुना कुचौ ते
स्पर्धेते किल कनकाचलेन सार्धम् ॥९१॥

अङ्गानि दत्त्वा हेमाङ्गि प्राणान् क्रीणासि चेन् नृणाम् ।
युक्तमेतन् न तु पुन कोण नयनपद्मयो ॥९२॥

जितरत्नरुचां सदा रदानां
सहवासेन परां मुदं दधानाम् ।
विरसाधरीकरोति नासा-
मधुना साहसशालि मौक्तिकं ते ॥९३॥

निभाल्य भूयो निजगौरिमाणं
मा नाम मानं सहसैव यायाः ।
गृहे गृहे पश्य तवाङ्गवर्णा
मुग्धे सुवर्णावलयो लुठन्ति ॥९४॥

करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः ।
कथमालि शृणोषि सादरं विपरीतार्थविदो हि योषितः ॥९५॥

तिरस्कृतो रोषवशात् परिष्वजन्
प्रियो मृगाक्ष्या शयितः पराङ्मुखः ।
किं दुःखितोऽसाविति कांदिशीकया
कयाचिदाचुम्ब्य चिराय सस्वजे ॥९६॥

चेलाञ्चलेनाननशीतरश्मि
संवृण्वतीनां हरिदृश्वरीणाम् ।
व्रजाङ्गनानां स्मरजातकम्पा-
दकाण्डसम्पातमियाय नीवी ॥९७॥

अधरेण समागमाद् रदानामरुणिम्ना पिहितोऽपि शुद्धभावः ।
हसितेन सितेन पक्ष्मलाक्ष्याः पुनरुल्लासमवाप जातपक्षः ॥९८॥

सरसिरुहोदरसुरभावधरितबिम्बाधरे मृगाक्षि तव ।
वद वदने मणिरदने ताम्बूलं केन लक्षयेम वयम् ॥९९॥

शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान् ।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥१००॥

किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः ।
कथय तथापि मुदे मम कथयिष्यति पथिक तव जाया ॥१०१॥

वदनारविन्दसौरभलोभादिन्दिन्दिरेषु निपतत्सु ।
मध्यधरार्थिनि सुदृशो दृशो जयन्त्यतिरुषा परुषाः ॥१०२॥

यदवधि दयितो विलोचनाभ्यां सहचरि दैववशेन दूरतोऽभूत् ।
तदवधि शिथिलीकृतो मदीयैरथ करणैः प्रणयो निजक्रियासु ॥१०३॥

निखिला रजनी प्रियेण दूरादुपयातेन विबोधिता कयापि ।
अधिकं न हि पारयामि वक्तुं सखि मा जल्प तवायसी रसज्ञा ॥१०४॥

निपतद्बाष्पसरोघमुक्तचाञ्चल्यतारकम् ।
कदा नयननीलाब्जमालोकेय मृगीदृशः ॥१०५॥

यदि लक्ष्मण सा मृगेक्षणा न मदीक्षासरणिं समेष्यति ।
अमुना जडजीवितेन मे जगता वा विफलेन किं फलम् ॥१०६॥

भवनं करुणावती विशन्ती गमनाज्ञालवलाभलालसेषु ।
तरुणेषु विलोचनाब्जमालामथ बाला पथि पातयांबभूव ॥१०७॥

पापं हन्त मया हतेन विहितं सीतापि यद्यापिता
सा मामिन्दुमुखी विना बत वने किं जीवितं धास्यति ।
आलोकेय कथं मुखं सुकृतिनां किं ते वदिष्यन्ति मां
राज्यं यातु रसातलं पुनरिदं न प्राणितुं कामये ॥१०८॥

उषसि प्रतिपक्षकामिनीसदनादन्तिकमञ्चति प्रिये ।
सुदृशो नयनाब्जकोणयोरुदियाय त्वरयारुणद्युतिः ॥१०९॥

क्षमापणैकपदयोः पदयोः पतति प्रिये ।
शेमुः सरोजवदनानयनारुणकान्तयः ॥११०॥

निर्वासयन्तीं धृतिमङ्गनानां शोभां हरेरेणदृशो धयन्त्याः ।
चिरापराधस्मृतिमांसलोऽपि रोषः क्षणप्राघुणिको बभूव ॥१११॥

राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम् ।
बाले वारय पान्थस्य वासदानविधानतः ॥११२॥

मलयानिलमनलीयति मणिभवनं काननीयति क्षणतः ।
विरहेण विकलहृदया निर्जलमीनायते महिला ॥११३॥

कालागुरुद्रवं सा हालाहलवद्विजानती नितराम् ।
अपि नीलोत्पलमालां बाला व्यालावलिं किलामनुते ॥११४॥

विधिवञ्चितया मया न यातं सखि सङ्केतनिकेतनं प्रियस्य ।
अधुना बत किं विधातुकामो मयि कामो नृपतिः पुनर्न जाने ॥११५॥

प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः ।
रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः ॥११६॥

सुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे ।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र सन्देहः ॥११७॥

रूपजला चलनयना नाभ्यावर्ता कचावलीभुजगा ।
मज्जन्ति यत्र सन्तः सेयं तरुणी तरङ्गिणी विषमा ॥११८॥

शोणाधरांशुसंभिन्नास्तन्वि ते वदनाम्बुजे ।
केसरा इव काशन्ते कान्तदन्तालिकान्तयः ॥११९॥

तया तिलोत्तमीयन्त्या मृगशावकचक्षुषा ।
ममायं मानुषो लोको नाकलोक इवाभवत् ॥१२०॥

अङ्कायमानमलिके मृगनाभिपङ्कं पङ्केरुहाक्षि वदनं तव वीक्ष्य बिभ्रत् ।
उल्लासपल्लवितकोमलपक्ष्ममूलाश्चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥१२१॥

शिशिरेण यथा सरोरुहं दिवसेनामृतरश्मिमण्डलम् ।
न मनागपि तन्वि शोभते तव रोषेण तथेदमाननम् ॥१२२॥

चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् ।
तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥१२३॥

शतकोटिकठिनचित्तः सोऽहं तस्याः सुधैकमयमूर्तेः ।
येनाकारिषि मित्रं स विकलहृदयो विधिर्वाच्यः ॥१२४॥

श्यामलेनाङ्कितं बाले भाले केनापि लक्ष्मणा ।
मुखं तवान्तरासुप्तभृङ्गफुल्लाम्बुजायते ॥१२५॥

अद्वितीयं रुचात्मानं मत्वा किं चन्द्र हृष्यसि ।
भूमण्डलमिदं मूढ केन वा विनिभालितम् ॥१२६॥

नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥१२७॥

स्तनाभोगे पतन् भाति कपोलात् कुटिलोऽलकः ।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥१२८॥

यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समास्ति ।
तथा लता पल्लविनी सगर्वे शोणाधरायाः सदृशी तथापि ॥१२९॥

इदं लताभिः स्तबकानताभिर्मनोहरं हन्त वनान्तरालम् ।
सदैव सेव्यं स्तनभारवत्यो न चेद् युवत्यो हृदयं हरेयुः ॥१३०॥

सा मदागमनबृंहिततोषा जागरेण गमिताखिलदोषा ।
बोधितापि बुबुधे मधुपैर्न प्रातराननजसौरभलुब्धैः ॥१३१॥

अविचिन्त्यशक्तिविभवेन सुन्दरि प्रथितस्य शम्बररिपो प्रभावत ।
विधुभावमञ्चतितमा तवानन नयने सरोजदलनिर्विशेषताम् ॥१३२॥

मीनवती नयनाभ्या करचरणाभ्या प्रफुल्लकमलवती ।
शैवालिनी च केशै सुरसेय सुन्दरी सरसी ॥१३३॥

पान्थ मन्दमते किं वा सतापमनुविन्दसि ।
पयोधर समाशास्व येन शान्तिमवाप्नुया ॥१३४॥

सपश्यता तामतिमात्रतन्वीं शोभाभिराभासितसर्वलोकाम् ।
सौदामिनी वा सितयामिनी वेत्येव जनाना हृदि सशयोऽभूत् ॥१३५॥

सपल्लवा किं नु विभाति वल्लरी सफुल्लपद्मा किमिय नु पद्मिनी ।
समुल्लसत्पाणिपदा स्मिताननामितीक्षमाणै समलम्भि सशय ॥१३६॥

नेत्राभिराम रामाया वदन वीक्ष्य तत्क्षणम ।
सरोज चन्द्रबिम्ब वेत्यखिला समशेरत ॥१३७॥

कनकद्रवकान्तिकान्तया मिलित राममुदीक्ष्य कान्तया ।
चपलायुतवारिदभ्रमात ननृते चातकपोतकैर्वने ॥१३८॥

वनितेति वदन्त्येता लोका सर्वे वदन्तु ते ।
यूना परिणता सेय तपस्येति मत मम ॥१३९॥

स्मयमानामना तत्र ता विलोक्य विलासिनीम् ।
चकोराश्चञ्चरीकाश्च मुद परतरा ययु ॥१४०॥

वदनकमलेन बाले स्मितसुषमालेशमादधासि यदा ।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥१४१॥

कलिन्दजानीरभरेऽर्धमग्ना बका प्रकाम कृतभूरिशब्दा ।
ध्वान्तेन वैराद् विनिगीर्यमाणा क्रोशन्ति मन्ये शशिन किशोरा ॥१४२॥

परस्परासङ्गसुखान् नतभ्रु व पयोधरौ पीनतरौ बभूवतु ।
तयोरमुष्यन्नयमुन्नतिं परामवैमि मध्यस्तनिमानमञ्चति ॥१४३॥

जनमोहकर तवालि मन्ये चिकुराकारमिद घनान्धकारम् ।
वदनेन्दुरुचामिहाप्रचारादिव तन्वङ्गि नितान्तकान्तिकान्तम् ॥१४४॥

दिवानिश वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती ।
वक्षोजताये किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥१४५॥

वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि ।
प्रियसङ्गसुखायेव मुक्ताहारस्तपस्यति ॥१४६॥

निधिं लावण्यानां तव खलु मुखं निर्मितवतो
महामोहं मन्ये सरसिरुहसूनोरुपचितम् ।
उपेक्ष्य त्वां यस्माद् विधुमयमकस्मादिह कृती
कलाहीनं दीनं विकल इव राजानमकरोत् ॥१४७॥

स्तनान्तर्गतमाणिक्यवपुर्बहिरुपागतम् ।
मनोऽनुरागि ते तन्वि मन्ये वल्लभमीक्षितुम् ॥१४८॥

जगदन्तरममृतमयैरंशुभिरापूरयन् नितराम् ।
उदयति वदनव्याजात् किमु राजा हरिणशावनयनायाः ॥१४९॥

तिमिरशारदचन्दिरचन्द्रिकाः कमलविद्रुमचम्पककोरकाः ।
यदि मिलन्ति कदापि तदाननं खलु तदा कलया तुलयामहे ॥१५०॥

प्रिये विषादं जहिहीति वाचं प्रिये सरागं वदति प्रियायाः ।
धारामुदारा विजगाल धारा विलोचनाभ्यां मनसश्च मानः ॥१५१॥

राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः ।
सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः ॥१५२॥

आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् ।
भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥१५३॥

यान्ती गुरुजनैः साकं स्मयमानाननाम्बुजा ।
तिर्यग्ग्रीवं यदद्राक्षीत् तन्निष्पत्राकरोज्जगत् ॥१५४॥

मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम् ।
वियोगदूरीकृतचेतनानां विनैव शैत्यं भवति प्रतीतिः ॥१५५॥

विबोधयन् करस्पर्शैः पद्मिनीं मुद्रिताननाम् ।
परिपूर्णोऽनुरागेण प्रातर्जयति भास्करः ॥१५६॥

आनम्य वल्गुवचनैर्विनिवारितेऽपि
रोषात् प्रयातुमुदिते मयि दूरदेशम् ।
बाला कराङ्गुलिनिदेशवशंवदेन
क्रीडाबिडालशिशुनाशु रुरोध मार्गम् ॥१५७॥

अभूदप्रत्यूहः कुसुमशरकोदण्डमहिमा
विलीनो लोकानां सह नयनतापोऽपि तिमिरैः ।

तवास्मिन् पीयूषं किरति परितस्तन्वि वदने ।
कुतो हेतोः श्वेतो विधुरयमुदेति प्रतिदिनम् ॥१५८॥

विनैव शस्त्रं हृदयानि यूनां विवेकभाजामपि दारयन्त्यः ।
अनल्पमायामपवल्गुलीला जयन्ति नीलाब्जदलायताक्ष्यः ॥१५९॥

यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः ।
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥१६०॥

न मिश्रयति लोचने सहसितं न संभाषते
कयासु तव किं च सा विरचयत्यरालां भ्रुवम् ।
विपक्षसुदृशः कथामिति निवेदयन्त्या पुरः
प्रियस्य शिथिलीकृतः स्वविषयेऽनुरागग्रहः ॥१६१॥

वडवानलकालकूटवन्मकरव्यालगणैः सहैधितः ।
रजनीरमणो भवेन् नृणां न कथं प्राणवियोगकारणम् ॥१६२॥

लभ्येत पुण्यैर्गृहिणी मनोज्ञा तया सुपुत्राः परितः पवित्राः ।
स्फीतं यशस्तैः समुदेति नित्यं तेनास्य नित्यः खलु नाकलोकः ॥१६३॥

प्रभुरपि याचितुकामो भजते वामोरु लाघवं सहसा ।
यदहं त्वयाधरार्थी सपदि विमुख्या निराशतां नीतः ॥१६४॥

जलकुम्भमुम्भितरसं सपदि सरस्याः समानयन्त्यास्ते ।
तटकुञ्जगूढसुरत भगवानेको मनोभवो वेद ॥१६५॥

त्वमिव पथिकः प्रियो मे विटपिस्तोमेषु गमयति क्लेशम् ।
किमितोऽन्यत् कुशलं मे संप्रति यत् पान्थ जीवामि ॥१६६॥

तुलामनालोक्य निजामखर्वं गौराङ्गि गर्वं न कदापि कुर्याः ।
लसन्ति नानाफलभारवत्यो लताः कियत्यो गहनान्तरेषु ॥१६७॥

इयमुल्लसिता मुखस्य शोभा परिफुल्लं नयनाम्बुजद्वयं ते ।
जलदालिमयं जगद् वितन्वन् कलितः क्वापि किमालि नीलमेघः ॥१६८॥

आसायं सलिलान्तः सवितारमुपास्य सादरं तपसा ।
अधुनाब्जेन मनाक् तव मानिनि तुलना मुखस्यापि ॥१६९॥

अयि मन्दस्मितमधुरं वदनं तन्वङ्गि यदि मनाक् कुरुषे ।
अधुनैव कलय शमितं राकारमणस्य हन्त साम्राज्यम् ॥१७०॥

मधुरतरं स्मयमानः स्वस्मिन्नेवालपन् छनैः किमपि ।
कोकनदयंस्त्रिलोकीमालम्बनशून्यमीक्षते क्षीबः ॥१७१॥

मधुरसान् मधुरं हि तवाधरं तरुणि मद्वदने विनिवेशय ।
मम गृहाण करेण कराम्बुजं प-प-पतामि ह-हा भ-भ-भूतले ॥१७२॥

शतेनोपायानां कथमपि गतः सौधशिखरं
सुधाफेनस्वच्छे रहसि शयितां पुष्पशयने ।
विबोध्य क्षामाङ्गीं चकितनयनां स्मेरवदनां
सनिःश्वासं श्लिष्यत्यहह सुकृती राजरमणीम् ॥१७३॥

गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति संमुखम् ।
आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः ॥१७४॥

यथा यथा तामरसेक्षणा मया पुनः सरागं नितरां निषेविता ।
तथा तथा तत्त्वकथेव सर्वतो विकृष्य मामेकरसं चकार सा ॥१७५॥

हरिणीप्रेक्षणा यत्र गृहिणी न विलोक्यते ।
सेवितं सर्वसंपद्भिरपि तद् भवनं वनम् ॥१७६॥

लीलालकावलिचलन्नयनारविन्दलीलावशंवदितलोकविलोचनायाः ।
सायाह्नि प्राणयिनो भवनं व्रजन्त्याश्चेतो न कस्य हरते गतिरङ्गनायाः ॥१७७॥

दन्तांशुकान्तमरविन्दरमापहारि सान्द्रामृतं वदनमेणविलोचनायाः ।
वेधा विधाय पुनरुक्तमिवेन्दुबिम्बं दूरीकरोति न कथं विदुषां वरेण्यः ॥१७८॥

सानुकम्पाः सानुरागाश्चतुराः शीलशीतलाः ।
हरन्ति हृदयं हन्त कान्तायाः स्वान्तवृत्तयः ॥१७९॥

विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम् ।
आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥१८०॥

---

# (८) करुणाविलासः

दैवे पराग्वदनशालिनि हन्त जाते
यातें च सम्प्रति दिवं प्रति बन्धुरत्ने ।
कस्मै मन कथयितासि निजामवस्थां
कः शीतलैः शमयिता वचनैस्तवाधिम् ॥१॥

प्रत्युद्गता सविनयं सहसा पुरेव
स्मेरैः स्मरस्य सचिवैः सरसावलोकैः ।
मामद्य मञ्जुरचनैर्वचनैश्च बाले
हा लेशतोऽपि न कथं शिशिरीकरोषि ॥२॥

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्यापि खेदगलिता विमुखीबभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ॥३॥

निर्वाणमङ्गलपदं त्वरया विशन्त्या
मुक्ता दयावति दयापि किल त्वयासौ ।
यन्मां न भामिनि निभालयसि प्रभात-
नीलारविन्दमदभङ्गकरैः कटाक्षैः ॥४॥

धृत्वा पदस्खलनभीतिवशात्करं मे
यारूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्या-
मारोहसीति हृदयं शतधा प्रयाति ॥५॥

निर्दूषणा गुणवती रसभावपूर्णा
सालङ्कृतिः श्रवणकोमलवर्णराजिः ।
सा मामकीनकवितेव मनोऽभिरामा
रामा कदापि हृदयान्मम नापयाति ॥६॥

चिन्ता शशाम सकलापि सरोरुहाणा-
मिन्दोश्च बिम्बमसमां सुषमामयासीत् ।
अभ्युद्गतं कलकलं किल कोकिलानां
प्राणप्रिये यदवधि त्वमितो गतासि ॥७॥

सौदामिनीविलसितप्रतिमानकाण्डे
दत्वा कियन्त्यपि दिनानि महेन्द्रभोगान् ।

मन्त्रोज्झितस्य नृपतेरिव राज्यलक्ष्मी-
भाग्यच्युतस्य करतो मम निर्गतासि ॥८॥

केनापि मे विलसितेन समुद्गतस्य
कोपस्य किं नु करभोरु वशंवदाभूः ।
यन् मां विहाय सहसैव पतिव्रतापि
यातासि मुक्तिरमणीसदनं विदूरम् ॥९॥

काव्यात्मना मनसि पर्यणमन् पुरा मे
पीयूषसारसरसास्तव ये विलासाः ।
तानन्तरेण रमणीरमणीयशीले
चेतोहरा सुकविता भविता कथं मः ॥१०॥

या तावकीनमधुरस्मितकान्तिकान्ता
भूमण्डले विफलतां कविषु व्यतानीत् ।
सा कातराक्षि विलयं त्वयि यातवत्यां
राकाधुना वहति वैभवमिन्दिरायाः ॥११॥

मन्दस्मितेन सुधया परिषिच्य या मां
नेत्रोत्पलैर्विकसितैरनिशं समीजे ।
सा नित्यमङ्गलमयी गृहदेवता मे
कामेश्वरी हृदयतो दयिता न याति ॥१२॥

भूमौ स्थिता रमण नाथ मनोहरेति
सम्बोधनैर्यमधिरोपितवत्यसि द्याम् ।
स्वर्गं गता कथमिव क्षिपसि त्वमेण-
शावाक्षि तं धरणिधूलिषु मामिदानीम् ॥१३॥

लावण्यमुज्ज्वलमपास्ततुलं च शीलं
लोकोत्तरं विनयमर्थमयं नयं च ।
एतान् गुणानशरणानय मां च हित्वा
हा हन्त सुन्दरि कथं त्रिदिवं गतासि ॥१४॥

कान्त्या सुवर्णवरया परया च शुद्धया
नित्यं स्विकाः खलु शिखाः परितः क्षिपन्तीम् ।
चेतोहरामपि कुशेशयलोचने त्वां
जानामि कोपकलुषो दहनो ददाह ॥१५॥

कर्पूरवर्तिरिव लोचनतापहन्त्री
फुल्लाम्बुजस्रगिव कण्ठसुखैकहेतुः ।

चेतश्चमत्कृतिपदं कवितेव रम्या
नम्या नरीभिरमरीव हि सा विरेजे ॥१६॥

स्वप्नान्तरेऽपि खलु भामिनि पत्युरन्यं
या दृष्टवत्यसि न कंचन साभिलाषम् ।
सा सम्प्रति प्रचलितासि गुणैर्विहीनं
प्राप्तुं कथं कथय हन्त परं पुमांसम् ॥१७॥

दयितस्य गुणाननुस्मरन्ती
शयने सम्प्रति या विलोकितासीत् ।
अधुना खलु हन्त सा कृशाङ्गी
गिरमङ्गीकुरुते न भाषितापि ॥१८॥

रीतिं गिराममृतवृष्टिकरीं तदीयां
तां चाकृतिं कृतिवरैरभिनन्दनीयाम् ।
लोकोत्तरामथ कृतिं करुणारसार्द्रां
स्तोतुं न कस्य समुदेति मनःप्रसारः । १९॥



# (६) शान्तविलासः

विशालविषयाटवीवलयलग्नदावानल-
प्रसृत्वरशिखावलीविकलित मदीय मन ।
अमन्दमिलदिन्दिरे निखिलमाधुरीमन्दिरे
मुकुन्दमुखचन्दिरे चिरमिद चकोरायताम् ॥१॥

अये जलधिनन्दिनीनयननीरजालम्बन
ज्वलज्ज्वलनजित्वरज्वरभरत्वराभङ्गुरम् ।
प्रभातजलजोन्नमद्गरिमगर्वसर्वंकषै-
र्जगत्त्रितयरोचनै शिशिरयाशु मां लोचनै ॥२॥

स्मृतापि तरुणातप करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम् ।
कलिन्दनगनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी ॥३॥

कलिन्दगिरिनन्दिनीतटवनान्तर भावयन
सदा पथि गतागतश्रमभर हरन प्राणिनाम ।
लतावलिशतावृतो मधुरया रुचा सभृतो
ममाशु हरतु श्रमानतितरा तमालद्रुम ॥४॥

वाचा निर्मलया सुधामधुरया या नाथ शिक्षामदा
स्तां स्वप्नेऽपि न सस्मराम्यहमहभावावृतो निस्त्रप ।
इत्याग शतशालिन पुनरपि स्वीयेषु मा बिभ्रत-
स्त्वत्तो नास्ति दयानिधियदुपते मत्तो न मत्तोऽपर ॥५॥

पाताल व्रज याहि वा सुरपुरीमारोह मेरो शिर
पारावारपरम्परास्तर तथाप्याशा न शान्तास्तव ।
आधिव्याधिजरापराहत यदि क्षेम निज वाञ्छसि
*श्रीकृष्णेति रसायन रसय रे शून्यै किमन्यै श्रमै ॥६॥*

मृद्वीका रसिता सिता समशिता स्फीत निपीत पय
स्वर्यातेन सुधाप्यधायि कतिधा रम्भाधर खण्डित ।
सत्य ब्रूहि मदीय जीव भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरय मधुरिमोद्गार क्वचिल् लक्षित ॥७॥

वज्र पापमहीभृता भवगदोद्रेकस्य सिद्धौषध
मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदय ।

क्रूरक्लेशमहीरुहामुरुभरज्वालाजटालः शिखी
द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम् ॥८॥

रे चेतः कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया ।
सौन्दर्यामृतमुद्गिरद्भिरभितः संमोह्य मन्दस्मितै-
रेष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति ॥९॥

अव्याख्येयां वितरति परां प्रीतिमन्तर्निमग्ना
कण्ठे लग्ना हरति नितरां यान्तरध्वान्तजालम् ।
तां द्राक्षाद्यैरपि बहुमतां माधुरीमुद्गिरन्तीं
कृष्णेत्याख्यां कथय रसने यद्यसि त्वं रसज्ञा ॥१०॥

सन्त्येवास्मिन् जगति बहवः पक्षिणो रम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु ।
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भि-
श्चित्तारूढं भवति किमपि ब्रह्म कृष्णाभिधानम् ॥११॥

विश्वद्रीच्या भुवनमभितो भासते यस्य भासा
सर्वेषामप्यहमिति विदां प्रत्ययालम्बनं यः ।
तं पृच्छन्ति स्वहृदयतलावेदिनो विष्णुमन्या-
नन्यायोऽयं शिव शिव नृणां केन वा वर्णनीयः ॥१२॥

सेवायां यदि साभिलाषमसि रे लक्ष्मीपतिः सेव्यतां
चिन्तायामसि सस्पृहं यदि तदा चक्रायुधश्चिन्त्यताम् ।
आलापं यदि काङ्क्षसि स्मररिपोर्गाथा तदालप्यतां
स्वापं वाञ्छसि चेन् निरर्गलसुखे चेतः सखे सुप्यताम् ॥१३॥

भवग्रीष्मप्रौढातपनिवहसंतप्तवपुषो
बलादुन्मूल्य द्राङ् निगडमविवेकव्यतिकरम् ।
विशुद्धेऽस्मिन्नात्मामृतसरसि नैराश्यशिशिरे
विगाहन्ते दूरीकृतकलुषजालाः सुकृतिनः ॥१४॥

बन्धोन्मुक्त्यै खलु मखमुखान् कुर्वते कर्मपाशा-
नन्तःशान्त्यै मुनिशतमतानल्पचिन्तां भजन्ते ।
तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः
सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम् ॥१५॥

प्रथमं चुम्बितचरणा जङ्घाजानूरुनाभिहृदयानि ।
आलिङ्ग्य भावना मे खेलतु विष्णोर्मुखाब्जशोभायाम् ॥१६॥

तरणोपायमपश्यन्नपि मामक जीव ताम्यसि कुतस्त्वम् ।
चेत·सरणावस्था किं नागन्ता कदापि नन्दसुत ॥१७॥

श्रियो मे मा सन्तु क्षणमपि च माद्यदगजघटा–
मदभ्राम्यद्भृङ्गावलिमधुरझङ्कारसुभगा· ।
निमग्नाना यासु द्रविणरसपर्याकुलदृशा
सपर्यासौकर्यं हरिचरणयोरस्तमयते ॥१८॥

किं नि·शक शेषे शेषे वयस समागतो मृत्यु ।
अथवा सुख शयीया निकटे जागर्ति जाह्नवी जननी ॥१९॥

सतापयामि किमिह धाव धाव धरातले हृदयम ।
अस्ति मम शिरसि सतत नन्दकुमार प्रभु परम ॥२०॥

रे रे मनो मम मनोभवशातनस्य
पादाम्बुजद्वयमनारतमानमन्तम ।
किं मा निपातयसि ससृतिगर्तमध्ये
नैतावता तव गमिष्यति पुत्रशोक ॥२१॥

मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमाल ।
रघुपतिमवलोक्य तत्र दूराद्दृषिनिकरैरिति सशय प्रपेदे ॥२२॥

तरणितनया किं स्यादेषा न तोयमयी हि सा
मरकतमणिज्योत्स्ना वा स्यात् न सा मधुरा कुत ।
इति रघुपते कायच्छायाविलोकनकौतुकै–
र्वनवसतिभि कै कैरादौ न सदिदिहे जनै ॥२३॥

चपला जलदाच्च्युता लता वा तरुमुख्यादिति सशये निमग्न ।
गुरुनि·श्वसितै कपिर्मनीषी निरणैषीदथ ता वियोगिनीति ॥२४॥

भूतिर्नीचगृहेषु विप्रसदने दारिद्र्यकोलाहलो
नाशो हन्त सतामसत्पथजुषामायु शताना शतम् ।
दुर्नीतिं तव वीक्ष्य कोपदहनज्वालाजटालोऽपि सन्
किं कुर्वे जगदीश यत पुनरह दीनो भवानीश्वर· ॥२५॥

आ मूलाद् रत्नसानोर्मलयवलयितादा च कूलात् पयोधे–
र्यावन्त सन्ति काव्यप्रणयनपटवस्ते विशङ्क वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजा
वाचामाचार्यताया पदमनुभवितु कोऽस्ति धन्यो मदन्य ॥२६॥

गिरा देवी वीणागुणरणनहीनादरकरा
यदीयाना वाचाममृतमयमाचामति रसम् ।

वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रघुन्वन् मूर्धानं नृपशुरथवायं पशुपतिः ॥२७॥

भद्राणि मा कुरु विषादमनादरेण
मात्सर्यमग्नमनसां सहसा खलानाम् ।
काव्यारविन्दमकरन्दमधुव्रताना-
मास्येषु धास्यसितमां कति नो विलासान् ॥२८॥

मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा
कदाचित् केषांचिन् न खलु विदधीरन्नपि मुदम् ।
ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो
न येषामानन्दं जनयति जगन्नाथभणितिः ॥२९॥

निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रवन्-
मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम् ।
काव्यं तर्हि सखे सुखेन कथय त्वं संमुखे मादृशां
नो चेद् दुष्कृतमात्मना कृतमिव स्वान्ताद् बहिर्मा कृथाः ॥३०॥

धुर्यैरपि माधुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकसुधानाम् ।
वन्द्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥३१॥

शास्त्राण्याकलितानि नित्यविधयः सर्वेऽपि संभाविता
दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः ।
संप्रत्युज्झितवासनं मधुपुरीमध्ये हरिः सेव्यते
सर्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम् ॥३२॥

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया ।
मदीयपद्यरत्नानां मञ्जूषैषा कृता मया ॥३३॥

जगज्जालं ज्योत्स्नामयनवसुधाभिर्जटिलयन्
जनानां संतापं त्रिविधमपि सद्यः प्रशमयन् ।
श्रितो वृन्दारण्यं नतनिखिलवृन्दारकवृतो
मम स्वान्तध्वान्तं तिरयतु नवीनो जलधरः ॥३४॥

ग्रीष्मचण्डकरमण्डलभीष्मज्वालसंसरणतापितमूर्तेः ।
प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः ॥३५॥

अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः ।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात् संतापं हरिनवतमालस्तिरयतु ॥३६॥

आलिङ्गितो जलधिकन्यकया सलीलं
लग्नः प्रियङ्गुलतयेव तरुस्तमालः ।
देहावसानसमये हृदये मदीये
देवश्चकास्तु भगवानरविन्दनाभः ॥३७॥

नयनानन्दसंदोहतुन्दिलीकरणक्षमा ।
तिरयत्वाशु संतापं कापि कादम्बिनी मम ॥३८॥

गणिकाजामिलमुख्यानवता भवता बताहमपि ।
सीदन् भवमरुगर्ते करुणामूर्ते न सर्वथोपेक्ष्यः ॥३९॥

मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः ।
श्वपचात्मभुवोर्निरन्तरा मम भूयात् परमात्मनि स्थितिः ॥४०॥

निखिलं जगदेव नश्वरं पुनरस्मिन् नितरां कलेवरम् ।
अथ तस्य कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥४१॥

प्रतिपलमखिलाँल्लोकान् मृत्युमुखं प्रविशतो निरीक्ष्यापि ।
हा हन्त किमिति चित्तं विरमति नाद्यापि विषयेभ्यः ॥४२॥

सपदि विलयमेतु राज्यलक्ष्मीरुपरि पतन्त्वथवा कृपाणधाराः ।
अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैतु धर्मात् ॥४३॥

अपि बहलदहनजालं मूर्ध्नि रिपुर्मे निरन्तरं धमतु ।
पातयतु वासिधारामहमणुमात्रं न किंचिदपि भाषे ॥४४॥

---

# (१०) आसफविलासः

श्रीगजवदनाय नमः ॥ अस्ति समस्तप्रशस्तभूपालमस्तकमणिमयूखमालालालितचरणनखरशरदिन्दुचन्द्रिकाचयचमत्कारचुलुम्बितचराचरान्तरतिमिरधोरणि सपुलकसुरासुरसुन्दरीसमुद्गीयमानस्फारपारदपरम्परासहोदरयशःसुधापटलसङ्गवामाङ्गितवामाङ्गीकवामदेवकलेवरप्रतिभटीकृतलोकालोकावनिधरो महस्तरुणतरणिकिरणसरणिसमुल्लासितजगदण्डमण्डलपुण्डरीकः साहिजहानाभिधश्चक्रवर्त्ती ।

अपि च –

पारीन्द्राणां धुरीणैरवनिधरगुहागर्भतः प्रोत्पतद्भिः
स्वापभ्रंशप्रकोपप्रचलितनयनप्रान्तमाकर्ण्यमानः ।
यत्प्रस्थानान्तरप्रलयजलधरध्वानधिक्कारधीरो
धृष्टक्षीरोदतीरो जगति विजयते दुन्दुभिद्वन्द्वनादः ॥१॥

द्वारान्दोलन्मदान्धद्विरदघनघटागण्डपट्टप्रसर्पद्-
दानोद्दामप्रणालीमिलदलिवलयोद्गीतचापप्रतापाः ।
भूपास्तेऽपि प्रभातोन्मदकमलसमुल्लासिशोभाभिरामां
दैन्यग्रामाग्धकारक्षयनदिनकृतो यस्य दृष्टिं श्रयन्ते ॥२॥

यस्योद्दामदिवानिशार्थिविलसद्दानप्रवाहप्रथा-
माकर्ण्यावनिमण्डलागतवियद्वन्दीन्द्रवृन्दाननात् ।
ईर्ष्यानिर्भरफुल्लरोमनिकरव्याजवलगदूध स्रवत्-
पीयूषप्रसरैः सुरेन्द्रसुरभिः प्रावृट्पयोदायते ॥३॥

रुदतो निशि शैशवेन दूरीकृतनिद्रस्य गजाननस्य गौरी ।
उपगायति भीतये यदुद्यन्मदयूथाधिपयूथदानकीर्त्तिम् ॥४॥

स कदाचिद्विपुलबलवशीभवद्वसुमतीवलयवेल्लनीकृतयशोविमलांशुकः प्रचण्डभुजदण्डमण्डलीभवत्कोदण्डनिःसरत्काण्डखण्डीकृताशेषशात्रवः करटतटनिर्गलन्मदद्रवनिर्झराणां सम्प्रति समुत्पन्नानां धराधरशिशूनामिव रिङ्गतां मतङ्गजानां सघट्टैः प्रथमसमागमत्रस्तनवाङ्गनानासाग्रलम्बिमुक्ताफलचापल्यमलिम्लुचानां प्रतिखुरनिकरशिलातलसघट्टसमुच्छलद्विद्युद्वल्लीकृतविपुलविस्फुलिङ्गच्छटापटलानां वाजिनां राजिभिश्च समाकुलया सागरसमानया सेनया समावृतो विषमतराऽऽरोहावरोहाभिः स्वरावृत्तिभिरिव क्लेशप्रचुरपरिणामसुखाभिर्वैदिककर्मसरणिभिरिव पद्धतिभिरनाकलितदुःखलेशः कश्मीरदेशमाजगाम ।

यस्मिन्ननवरतमपरिमितपयोदपटलपर्यायतत्प्रालेयपुञ्जपञ्जरितेन परितः स्फुरता रजतप्राकारेणेव गौरीगुरुणा हिमगिरिणा वेष्टितापरिमितकुसुमामोदमाद्यन्मधुव्रतव्रातगीतमाहात्म्यैः कैरपि परिणतरसभारतुन्दिलानां फलानां प्रकरेणोपनम्रशाखाशतैरतिथिर्यैरिव

गृहस्थैरसंख्यैः शाखिभिः शोभिता परिफुल्लपद्मिनीपरिषद्विधूननोद्भूतपरागपटलपाण्डुरितैश्चञ्चुपुटैरतिरसलम्पटाभिर्वरटाभिः कण्डूयितकपोलानां राजहंसानामावलिभिः सेवितैरेकीभवदिन्द्रनीलमणिमयूखमांसलानामन्तर्विभावनाविशेषविलोकनीयशेषशिखामणीनां सलिलानामाकरैः कमनीयतरा निविडतरशाद्वलश्यामलिम्ना मरकतमणिमयीव समुल्लसति वसुमती ।

अथ तत्र सकलसामन्तचक्रचूडाचुम्बितनिखिलभूमण्डलमण्डनायितचरणकमलपरिमललम्पटीभवद्बहलविबुधजनव्रातमाद्यदिन्दिन्दिरमञ्जुलगुञ्जितैर्मुखरितहरिदन्तरालो विलसितहिमशैलशृङ्गस्खलत्तुङ्गगङ्गातरङ्गाभिरामत्विषा शरदभ्रालिविभ्राजिशुभ्रांशुवरकिरणकान्तिद्विषा चतुरुदधिपारश्लिषा यशःसुधापटलेन परिपाण्डरितजगदण्डमण्डलोऽनवरतविद्वद्दुमद्रोहिदारिद्र्यमाद्यद्द्विपोद्दामदर्पौघविद्रावणप्रौढपञ्चाननो महामहीरुह इव द्विजकुलायहितः ऋतुरिव मधुरिव सकलसुमन प्रसादनोऽपि हिमांशुरिव सकलासुमन.प्रसादनः समरार्चितोप्यमरार्चित. सार्वभौमसंबन्धिषु सकलेषु सामन्तेषु वाङ्मयेष्विव काव्यकलापः काव्यकलापेष्विव ध्वनि. ध्वनिष्विव रसो रसेष्विव शृङ्गारः सकलसहृदयहृदयंगमेन महिम्ना मधुरिम्णा च सम्भावितः सकलशास्त्रसारावगाही नवाबासफजाही ।

कदाचित् कुतुकाकुलतया विविधसुमनःसमूहसुषमासमास्तरणसंभावितविश्वंभरावलयमुपरिमिलदलिपुञ्जमञ्जुलगुञ्जितैर्वन्दिवृन्दवदनविनिर्गतविबुधविटपिविजयबिरुदावलीभिरिवानतकन्धरैरसंख्यैरवनीरुहैः कठिनकरकरनिकरसंत्रासतः शरणागतैरिव तिमिरकुटुम्बैरम्बुनिकुरुम्बैरापूरिताभिर्वापीभिश्च मनोहरमेकीकृतमिव त्रैलोक्यलक्ष्मीलावण्यं निशातोपवनं प्रविशद्भिर्वाङ्मनसवर्त्मातिवर्तिपुञ्जीकृतसकलकुसुमसौकुमार्यसारमयैरवयवैः स्वयमनङ्गेनेव निर्मिताभिः भृशं नयननिपातस्थानीभवदङ्गीभिस्तनुतरतनुच्छायादन्तुरितवनान्तराभिर्निकषशिलातलोल्लिखिताभिरिव काञ्चनरेखाभिः निबिडतरनीलपयोदभ्रमेणागताभिरिव सौदामिनीभिर्दरविकसितरदनमणिकिरणसरणिसमाप्यायितचकोरीभिरुपरिविभ्राम्यमाणेनापि स्वतो नीराजितात्मनेव परिफुल्लकमलेन राजितकरकिसलयाभिर्दूरादुन्मुक्तपाथोरुहाणामुन्मुखं धावतामुन्मत्तमधुव्रतानामालिभिराकुलीकृताभिः काभिरपि किंचिदुच्चपरिणतफलग्रहणलालसातितुङ्गीभवत्कुचतटसमापतत्प्रियनयनसकोचितेन चोन्नमितपरावर्तितभुजलताभिरन्याभिः करकमलकलितमुकुरमण्डलप्रतिबिम्बितप्रियवदनचुम्बनमुकुलीकृताधराभिः काभिरपि गायन्तीभिः सारिकावलिवृथाङ्गुलीकम्पसम्पादितवीणागीतभ्रमाभिरङ्गनाभिरनङ्गः समुल्लासयाम्बभूवे ।

तं च गुणाना परस्परससर्गजनितगुरुगर्वनिर्वासनाय विधिना निर्मितमिव सभामण्डलं परमसौन्दर्यसुन्दरीकरणलालितलोचनलोभनीयमूर्त्ति तारुचानङ्गसर्वस्वायमानरूपयौवनशालिनीरवधीनभिरामतागुणस्य निदानानि प्रथमरसस्यागोचर कविगवीनां तच्च निखिलजननयननिर्माणसाफल्यमिव वनमालोक्य चण्डीशकरताण्डवितचण्डदण्डाहतिखण्डीकृतकोटिकोटीरकोटिभिर्धरणितलधूलिधवलीभवदष्टाङ्गाभिरामैः पितामहादिभिरमरनिकरैः सेवितं भगवन्तममरेश्वराख्यं सदाशिवमर्चयितुमायातः कश्मीरमण्डलमाखण्डलो नयनसाहस्रविद्दतीकृताननमात्मानं सुकृतिपरम्परोपभोग्यास्त्रिदशतरुणीनिशातोपवनापह्नुतरमणीयतया निजनयनानामनानन्दनं नन्दनं च नाति बहु मेने ।

अथ सकललोकनिस्तारविस्तारितमहोपकारपरम्परापराधीनमानसेन प्रतिदिनमुद्यदनवद्यहृद्यगद्यपद्याद्यनकविद्याविद्योतितान्त करणैः कविभिरुपास्यमानेन कृतयुगीकृतकलिकालेन कुमतितृणजालसमाच्छादितवेदवनमार्गविलोकनाय समुद्दीपितसत्तकदहनज्वालाजालेन मूर्त्तिमतेव नवाबासफखानमन प्रसादेन द्विजकुलसेवाहेवाकिवाङ्मनःकायेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन श्रीसार्वभौमसाहिजहानप्रसादाधिगतपण्डितरायपदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्ययमाख्यायिका निरमीयत । सेयमनुग्रहेण सहृदयानामनुदिनमुल्लसिता भवतात् ।

इति श्रीतैलङ्गवेङ्गिनाटीयकुलोदभवश्रीपण्डितराजजगन्नाथविरचिता
आख्यायिका समाप्ता ।

---

# (११) रसगङ्गाधरमात्रस्थपद्यानि

॥ उपक्रमाशपद्यानि ॥

स्मृतापि तरुणातप करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषा वलयिता शतैर्विद्युताम् ।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी ॥१॥

श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्च
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।
देवादेवाध्यगीष्ट स्मरहरनगरे शासन जैमिनीय
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो य ॥२॥

पाषाणादपि पीयूष स्यन्दते यस्य लीलया ।
त वन्दे पेरुभट्टाख्य लक्ष्मीकान्त महागुरुम् ॥३॥

निमग्नेन क्लेशैर्मननजलधेरन्तरुदर
मयोन्नीतो लोके ललितरसगङ्गाधरमणि ।
हरन्नन्तर्ध्वान्त हृदयमधिरूढो गुणवता-
मलङ्कारान् सर्वानपि गलितगर्वान् रचयतु ॥४॥

परिष्कुर्वन्त्वर्थान् सहृदयधुरीणा' कतिपये
तथापि क्लेशो मे कथमपि गतार्थो न भविता ।
तिमीन्द्रा सक्षोभ विदधतु पयोधे पुनरिमे
किमेतेनायासो भवति विफलो मन्दरगिरे ॥५॥

निर्माय नूतनमुदाहरणानुरूप
काव्य मयात्र निहित न परस्य किंचित ।
किं सेव्यते सुमनसा मनसापि गन्ध
कस्तूरिकाजननशक्तिभृता मृगेण ॥६॥

मननतरितीर्णविद्यार्णवो जगन्नाथपण्डितनरेन्द्र ।
रसगङ्गाधरनाम्नीं करोति कुतुकेन काव्यमीमासाम् ॥७॥

रसगङ्गाधरनामा सन्दर्भोऽय चिर जयतु ।
किं च कुलानि कवीना निसर्गसम्यञ्चि रञ्जयतु ॥८॥

---

॥ उदाहरणपद्यानि ॥

अगाधं परितः पूर्णमालोक्य स महार्णवम् ।
हृदयं रामभद्रस्य सस्मार पवनात्मजः ॥१॥

अङ्कितान्यक्षसंघातैः, सरोगाणि सदैव हि ।
शरीरिणां शरीराणि कमलानि न संशयः ॥२॥

अतिमात्रबलेषु चापलं विदधानः कुमतिर्विनश्यति ।
त्रिपुरद्विषि वीरतां वहन्नवलिप्तः कुसुमायुधो यथा ॥३॥

अपहाय सकलबान्धवचिन्तामुद्वास्य गुरुकुलप्रणयम् ।
हा तनय विनयशालिन् कथमिव परलोकपथिकोऽभूः ॥४॥

अपि वक्ति गिरां पतिः स्वयं यदि तासामधिदेवतापि वा ।
अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः ॥५॥

अबलानां श्रिय हृत्वा वारिवाहैः सहानिशम् ।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः ॥६॥

अभिरामतासदनमम्बुजानने नयनद्वयं जनमनोहरं तव ।
इयति प्रपञ्चविषयेऽपि वेधसे तुलनामुदञ्चति परस्परात्मना ॥७॥

अमृतद्रवमाधुरीभृतः सुखयन्ति श्रवसी सखे गिरः ।
नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव ॥८॥

अमृतस्य चन्द्रिकाया ललितायाश्चापि कवितायाः ।
सुजनस्य च निर्माणं जनयति नहि कस्य सन्तोषम् ॥९॥

अम्बरत्यम्बरं यद्वत् समुद्रोऽपि समुद्रति ।
विक्रमार्कमहीपाल तथा त्वं विक्रमार्कसि ॥१०॥

अम्भोजिनीबान्धवनन्दनायां कूजन् बकानां समजो विरेजे ।
रूपान्तराक्रान्तगृहः समन्तात् पुञ्जीभवञ् शुक्ल इवाभ्रमार्यो ॥११॥

अयं सज्जनकार्पासरक्षणैकहुताशनः ।
परदुःखाग्निशमनमारुतः केन वर्ण्यते ॥१२॥

अयि पवनरयाणां निर्दयानां हयानां दलयय गतिमहं नो सद्गरं द्रष्टुमीहे ।
श्रुतिविवरममी मे दारयन्ति प्रकुप्यद्भुजगनिभभुजानां बाहुजानां निनादाः ॥१३॥

अयि लावण्यजलाशय तस्या हा हन्त मीननयनायाः ।
दूरस्थे त्वयि किं वा कथयामो विस्तरेणालम् ॥१४॥

अये राजन्नाकर्णय कुतुकमाकर्णनयन
स्फुरन्ती हस्ताम्भोरुहि तव कृपाणी रणमुखे ।
विपक्षाणा वक्षस्यहह तरुणाना निपतति
प्रगल्भा श्यामानामनुपरतकामा प्रकृतय ॥१५॥

अये राजन्नाकर्णय कुतुकमाकर्णनयन
त्वदाधारा कीर्तिर्वसति किल मौलौ दशदिशाम् ।
त्वदेकालम्बोऽय गुणगणकदम्बो गुणनिधे
मुखेषु प्रौढाना विलसति कवीनामविरतम् ॥१६॥

अये लीलाभग्नत्रिपुरहरकोदण्डमहिमन्
कथा यन् नोदञ्चत्यतुलबलधैर्यस्य भवत ।
अय को वा तत्र प्रसृमरफणाकोणनिहित-
क्षिति शेष श्रीमान् कमठकुलचूडामणिरपि ॥१७॥

अर्जुनस्य गुरुर्मायामनुज परम पुमान् ।
गुञ्जापुञ्जधर पायादपायादिह कोऽपि व ॥१८॥

अर्थिनो दातुमेवेति त्रातुमेवेति कातरा ।
जातोऽय हन्तुमेवेति वीरास्त्वा देव जानते ॥१९॥

अर्थिभिश्छिद्यमानोऽपि स मुनिर्न व्यकम्पत ।
विनाशेऽप्युन्नत स्थैर्यं न जहाति द्रुमो यथा ॥२०॥

अलका फणिशावतुल्यशीला नयनान्ता परिपुङ्खितेषुलीला ।
चपलोपमिता खलु स्वय या बत लोके सुखसाधन कथ सा ॥२१॥

आह्लादिनी नयनयो रुचिरेन्दवीव कण्ठे कृतातिशिशिराम्बुजमालिकेव ।
आनन्दिनी हृदि गता रसभावनेव सा नैव विस्मृतिपथ मम जातु याति ॥२२॥

इदमुदधेरुदर वा नयन वात्रेरुतेश्वरस्य मन ।
दशरथगृहे तदानीमेव सशेरते स्म कवयोऽपि ॥२३॥

इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना ।
ममाय विषमस्ताप केन वा शमयिष्यते ॥२४॥

इन्दुस्तु परमोत्कृष्टो य क्षीणो वर्धते मुहु ।
धिगिद यौवन तन्वि क्षीण न पुनरेति यत् ॥२५॥

इयति प्रपञ्चविषये तीर्थानि कियन्ति सन्ति पुण्यानि ।
परमार्थतो विचारे देवी गङ्गा तु गङ्गेव ॥२६॥

ईश्वरेण समो ब्रह्मा पिता साक्षान् महेश्वरः ।
पार्वत्या सदृशी लक्ष्मीर्माता मातुः समा भुवि ॥
पितास्य काष्ठसदृशः स्वयं पावकसन्निभः ॥२७॥

उत्सङ्गे तव गङ्गे पायं पायं पयोऽतिमधुरतरम् ।
शमिताखिलश्रमभरः कथय कदाहं चिराय शयिताहे ॥२८॥

उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा ।
सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥२९॥

उन्मूलितः सह मदेन बलाद् बलारेरुत्थापितो बलभृतां सह विस्मयेन ।
नीलातपत्रमणिदण्डरुचा सहैव पाणौ धृतो गिरिधरेण गिरिः पुनातु ॥३०॥

उपकारमस्य साधोर्नैवाहं विस्मरामि जलदस्य ।
दृष्टेन येन सहसा निवेद्यते नवघनश्यामः ॥३१॥

उर्वीं शासति मय्युपद्रवलवः कस्यापि न स्यादिति
प्रौढं व्याहरतो वचस्तव कथं देव प्रतीमो वयम् ।
प्रत्यक्षं भवतो विपक्षनिवहैर्धामुत्पतद्भिः क्षुधा
यद् युष्मत्कुलकोटिमूलपुरुषो निर्भिद्यते भास्करः ॥३२॥

ऋतुराजं भ्रमरहितं यदाहमाकर्णयामि नियमेन ।
आरोहति स्मृतिपथं तदैव भगवान् मुनिर्व्यासः ॥३३॥

एकीभवत्प्रलयकालपयोधिकल्प-
मालोक्य संगरगतं कुरुवीरसैन्यम् ।
सस्मार तल्पमहिपुङ्गवकायकान्तं
निद्रां च योगकलितां भगवान् मुकुन्दः ॥३४॥

एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि ।
अनुहरति सुभग तस्या वामार्धं दक्षिणार्धस्य ॥३५॥

एतावति प्रपञ्चेऽस्मिन् सदेवासुरमानुषे ।
केनोपमीयतां तज्ज्ञैः रामो रामपराक्रमः ॥३६॥

एतावति महीपालमण्डलेऽवनिमण्डन ।
तारकापरियन्मध्ये राजन् राजेव राजसे ॥३७॥

कटु जल्पति कश्चिदल्पवेदी यदि चेदोदृशमत्र किं विदध्मः ।
कथमिन्दुरिवाननं त्वदीयं सकलङ्कः स कलङ्कहीनमेतत् ॥३८॥

कतिपयदिवसविलास नित्यसुखासङ्गमङ्गलसवित्री ।
खर्वयति स्ववास गीर्वाणधुनीतटस्थितिर्नितराम ॥३९॥

कमलति वदन मस्यामलपल्वलका मृणालतो बाहू ।
शैवालति रोमावलिरदभुतसरसीव सा बाला ॥४०॥

करकलितचक्रघटनो नित्य पीताम्बरस्तमोऽराति ।
निजसेविजाडचनाशनचतुरो हरिरस्तु भूतये भवताम ॥४१॥

करतलनिर्गलदविरलदानजलोल्लासितावनीवलय ।
धनदाग्रमहिनमूर्तिर्जयतितरा सार्वभौमोऽयम ॥४२॥

कलितकुलिशघाता केऽपि खेलन्ति वाता कुशलमिह कथ वा जायता जीविते मे ।
अयमपि बत गुञ्जन्नालि माकन्दमौलौ चुलुकयति मदीया चेतना चञ्चरीक ॥४३॥

कलिन्दशैलादियमाप्रयाग केनापि दीर्घा परिखा निखाता ।
मन्ये तलस्पर्शविहीनमस्यामाकाशमानीलमिद विभाति ॥४४॥

कस्तृप्येन् मार्मिकस्त्वाचि रमणीयेषु वस्तुषु ।
हित्वान्तिक सरोजिन्या पश्य याति न षटपद ॥४५॥

कातरा परदुखेषु निजदुखेष्वकातरा ।
अर्थेष्वलोभा यशसि सलोभा सन्ति साधव ॥४६॥

कान्तारे विलपन्तीना त्वदरातिमृगीदृशाम ।
देवनानि समाकर्ण्य हरिदभिरपि चुक्षुभे ॥४७॥

कारुण्यकुसुमाकाश शान्तिशैत्यहुताशन ।
यशसौरभ्यलशुन पिशुन साधुदुखद ॥४८॥

कि कुर्वते दरिद्रा कासारवती धरा मनोज्ञतरा ।
कोपावनस्त्रिलोक्या ॥४९॥

कि नाम तेन न कृत सुकृत पुरारे दासीकृता न खलु का भुवनेषु लक्ष्मी ।
भोगा न के बुभुजिरे विबुधरलभ्या यनार्चितोऽसि करुणाकर हेलयापि ॥५०॥

किमह कथयामि योषितानधर बिम्बफल समप्य या ।
सुरसानि हरन्ति हन्त हा विदुषा पुण्यफलानि सत्वरम् ॥५१॥

कियदिदमधिक मे यद् द्विजायार्थयित्रे कवचमरमणीय कुण्डले चार्पयामि ।
अकरुणमवकृत्य द्राक कृपाणेन निर्यद्बहलरुधिरधार मौलिमावेदयामि ॥५२॥

कुङ्कुमद्रवलिप्ताङ्गः काषायवसनो यतिः ।
कोमलातपबालाभ्रः सन्ध्याकालो न संशयः ॥५३॥

कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने ।
क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥५४॥

कुचाभ्यामालीढं सहजकठिनाभ्यामपि रमे
न काठिन्यं धत्ते तव हृदयमत्यन्तमृदुलम् ।
मृगाङ्गानामन्तर्जननि निवसन्ती खलु चिरं
न कस्तूरी दूरीभवति निजसौरभ्यविभवात् ॥५५॥

कुण्डलीकृतकोदण्डदोर्दण्डस्य पुरस्तव ।
मृगारातेरिव मृगाः परे नैवावतस्थिरे ॥५६॥

कुत्र शैवं धनुरिदं क्व चायं प्राकृतः शिशुः ।
भङ्गस्तु सर्वसंहर्त्रा कालेनेव विनिर्मितः ॥५७॥

कुलिशमिव कठिनमसतां हृदयं जानीहि हृदयमिव कुलिशम् ।
प्रकृतिः सतां सुमधुरा सुधेव हि प्रकृतिरिव च सुधा ॥५८॥

कुसुमानि शरा मृणालजालान्यपि कालायसकर्कशान्यभूवन् ।
सुदृशो दहनायते स्म राका भवनाकाशमयाभवत् पयोधिः ॥५९॥

कृतमपि महोपकारं पय इव पीत्वा निरातङ्कम् ।
प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ॥६०॥

कृत्वा सूत्रैः सुगूढार्थैः प्रकृतेः प्रत्ययं परम् ।
आगमान् भावयन् भाति वैयाकरणपुङ्गवः ॥६१॥

कृपया सुधया सिञ्च हरे मां तापमूर्च्छितम् ।
जगज्जीवन तेनाहं जीविष्यामि न संशयः ॥६२॥

कृष्णपक्षाधिकरुचिः सदा सम्पूर्णमण्डलः ।
भूपोऽयं निष्कलङ्कात्मा मोदते वसुधातले ॥६३॥

केऽपि स्मरन्त्यनुसरन्ति च केचिदन्ये
पश्यन्ति पुण्यपुरुषाः कति च स्पृशन्ति ।
मातर्मुरारिचरणाम्बुजमाध्वि गङ्गे
भाग्याधिकाः कतिपये भवतीं पिबन्ति ॥६४॥

कोदण्डच्युतकाण्डमण्डलसमाकीर्णत्रिलोकीतलं
रामं दृष्टवतां रणे दशमुखप्राणापहारोद्यतम् ।

दुर्दर्शोऽपि नृणामभूद्रुमरुद्वेगप्रचण्डीकृत-
ज्वालाभिर्जगतीतलं क्वलयन् कालानलो गोचरः ॥६५॥

कोपेऽपि वदनं तन्वि तुल्यं कोकनदेन ते ।
उत्तमानां विकारेऽपि नापैति रमणीयता ॥६६॥

कोमलातपशोणाभ्रसन्ध्याकालसहोदरः ।
काषायवसनो याति कुङ्कुमालेपनो यतिः ॥६७॥

कौमुदीव भवती विभाति मे कातराक्षि भवतीव कौमुदी ।
अम्बुजेन तुलितं विलोचनं लोचनेन च तवाम्बुजं समम् ॥६८॥

क्रूरसत्त्वाकुलो दोषाकरभूस्तोयधिर्यया ।
न तया त्वं यतो भूप स्थिरधीरसि निर्मलः ॥६९॥

क्वचिदपि कार्ये मृदुलं क्वापि च कठिनं विलोक्य हृदयं ते ।
को न स्मरति नराधिप नवनीतं किं च शतकोटिम् ॥७०॥

क्व वा रामः कामप्रतिभटललाटंतपबल-
स्तव क्वामी वीरा रणशिरसि धीरा मखभुजाम् ।
दिधक्षोस्त्रैलोक्यं प्रलयशिखिनः पद्मनयन
प्रगल्भं प्रालेयं प्रशममसि कर्तुं व्यवसितः ॥७१॥

क्व शुक्तयः क्व वा मुक्ताः क्व पङ्कः क्व च पङ्कजम् ।
क्व मृगाः क्व च कस्तूरी धिग् विधातुर्विदग्धताम् ॥७२॥

क्व सा कुसुमसाराङ्गी सीता चन्द्रकलोपमा ।
क्व रक्षःखदिराङ्गारमध्यसंवासवैशसम् ॥७३॥

खर्वीकृतेन्द्रगर्वं त्वरया चक्रेण भिन्ननक्रमुख ।
लीलात्तकोलमूर्ते मामुद्धर्तुं कथं न शक्तोऽसि ॥७४॥

खलः कापट्यदोषेण दूरेणैव विसृज्यते ।
अपायशङ्किभिर्लोकैर्विषेणाशीविषो यथा ॥७५॥

खलानामुक्तयो हन्त कोमलाः शीतला अपि ।
हृदयानीह साधूनां छिन्दन्त्यथ दहन्ति च ॥७६॥

गगनचर जलबिम्बं कथमिव पूर्णं वदन्ति विद्वांसः ।
दशरथचत्वरचारी हृज्ज्वरहारी विधुस्तु परिपूर्णः ॥७७॥

गगनाद् गलितो गभस्तिमानुत प्राप्य शिशिरो विभावसुः ।
मुनिरेवमरुन्धतीपतिः सकलत्रः समशंत राघवे ॥७८॥

गङ्गा हृद्या यथा गङ्गा गङ्गा गङ्गेव पावनी ।
हरिणा सदृशो बन्धुर्हरितुल्यः परो हरिः ॥७९॥

गाम्भीर्येणातिमात्रेण महिम्ना परमेण च ।
राघवस्य द्वितीयोऽब्धिरम्बुधेश्चापि राघवः ॥८०॥

गाहितमखिलं विपिनं परितो दृष्टाश्च विटपिनः सर्वे ।
सहकार न प्रपेदे मधुपेन तथापि ते समं जगति ॥८१॥

गिरं समाकर्णयितुं यदीयां सदा रसज्ञैरनुभावनीयाम् ।
समीहते नित्यमनन्यचेता नभस्वदात्मंभरिवंशनेता ॥८२॥

गिरामविषयो राजन् विस्तारस्तव चेतसः ।
सावकाशतया यत्र शेते विश्वाश्रयो हरिः ॥८३॥

गोष्पतिरप्याङ्गिरसो गदितुं ते गुणगणात् सगर्वो न ।
इन्द्रः सहस्रनयनोऽप्यद्भुतरूपं परिच्छेत्तुम् ॥८४॥

गुणवृद्धी परे यस्मिन् नैव स्तः प्रत्ययात्मके ।
बुधेषु सदिति ख्यातं तद् ब्रह्म समुपास्महे ॥ ८५॥

चकोरनयनानन्दि कह्लाराह्लादकारणम् ।
तमसां कदनं भाति वदनं सुन्दरं तव ॥८६॥

चन्द्रांशुनिर्मलं वारि चन्द्रो हंससमद्युतिः ।
हंसास्तु शरदि स्मेरपुण्डरीकमनोरमाः ॥८७॥

चाञ्चल्ययोगि नयनं तव जलजानां श्रियं हरतु ।
विपिनेऽतिचञ्चलानामपि च मृगाणां कथं हरति ॥८८॥

जगति नरजन्म तस्मिन् वैदुष्यं तत्र सत्कविता ।
कवितायां परिणामो दुष्प्रापः पुण्यहीनेन ॥८९॥

जगत्त्रयत्राणधृतव्रतस्य क्षमातलं केवलमेव रक्षन् ।
कथं समारोहसि हन्त राजन् सहस्रनेत्रस्य तुलां द्विनेत्रः ॥९०॥

जनयन्ति परप्रीतिं नराः सत्कुलसम्भवाः ।
नहि कारस्करः क्वापि तापनिर्वापणक्षमः ॥९१॥

जीवितं मृत्युना लीढं सम्पदः श्वासविभ्रमाः ।
रामाः क्षणप्रभारामाः शल्यान्येतानि देहिनाम् ॥९२॥

ज्योत्स्नाभमञ्जुहसिता सकलकलाकान्तकान्तवदनश्री ।
राकेव रम्यरूपा राघवरमणी विराजते नितराम् ॥९३॥

तल्पगतापि च सुतनु श्वासासङ्ग न या सेहे ।
सम्प्रति सा हृदयगत प्रियपाणि मन्दमाक्षिपति ॥९४॥

तापत्रय खलु नृणा हृदि तावदेव यावन्न ते दलति देव कृपाकटाक्ष ॥
प्राचीलकालटपरिचुम्बिनि शालुबिम्बे पत्केरुहोदरगतानि कुतस्तमासि ॥९५॥

तीर्थं गङ्गा तदितरदपा निर्मल सद्मसमात्र
देवौ तस्या प्रसवनिलयौ नाकिनोऽन्ये वराका ।
सा यत्रास्ते स हि जनपदो मृत्तिकामात्रमन्यत
ता यो नित्य नमति स बुधो बोधशून्यस्ततोऽन्य ॥९६॥

त्वत्प्रतापमहादीपशिखाविपुलकज्जलं ।
नून नभस्तले नित्य नीलिमा नूतनायते ॥९७॥

त्वदङ्गणसमुद्भूता सिक्ता कुङ्कुमवारिभि ।
त्वदङ्गतुलना याति कदाचिल लवलीलता ॥९८॥

त्वद्विपक्षमहीपाला स्वर्बालाधरपल्लवम् ।
पीडयन्तितरा तीव्रदारुणैर्दशनक्षतैं ॥९९॥

त्वयि कुपिते रिपुमण्डलखण्डनपाण्डित्यसम्पदुद्दण्डे ।
गिरिगहनेऽरिवधूना दिवसैं सह लोचनानि वर्षन्ति ॥१००॥

त्वा गीर्वाणगुरु सर्वे वदन्तु कवयस्तु ते ।
समानकक्षस्तेनासीत्येयोऽर्थस्तु मतो मम ॥१०१॥

त्वामन्तरात्मनि लसन्तमनन्तमज्ञा
स्तीर्थेषु हन्त मदनान्तक शोधयन्त ।
विस्मृत्य कण्ठतटमध्यपरिस्फुरन्त
चिन्तामणि क्षितिरज सु गवेषयन्ति ॥१०२॥

दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥१०३॥

दशाननेन दृप्तेन नीयमाना बभौ सती ।
द्विरदेन मदान्धेन कृष्यमाणेव पद्मिनी ॥१०४॥

दूरीकर्तुं प्रिय बाला पद्मेनाताडयद रुषा ।
स बाणेन हतस्तेन तामाशु परिपस्वजे ॥१०५॥

दृष्टिर्मृगीदृशोऽत्यन्तं श्रुत्यन्तपरिशीलिनी ।
मुच्यन्ते बन्धनात् केशा विचित्रा वेधसो गतिः ॥१०६॥

देव त्वद्दर्शनादेव लीयन्ते पुण्यराशयः ।
किं चादर्शनतः पापमशेषमपि नश्यति ॥१०७॥

द्राक्षेव मधुरं वाक्यं चरितं कौमुदी यथा ।
सर्वदार्द्राणि चेतांसि सुधेव सुमहात्मनाम् ॥१०८॥

द्रुमपङ्कजविद्वांसः सर्वसंतोषपोषकाः ।
मुधैव हन्त हन्यन्ते कुठारहिमदुर्जनैः ॥१०९॥

द्रोहो निरागसां लोके हीनो हालाहलादपि ।
अयं हन्ति कुलं साग्रं भोक्तारं केवलं तु सः ॥११०॥

नगरान्तर्महीन्द्रस्य महेन्द्रमहितश्रियः ।
सुरालये खलु क्षीबा देवा इव विरेजिरे ॥१११॥

न नगाः काननगा यद् रुदतीषु त्वदरिभूपसुदतीषु ।
शकलीभवन्ति शतधा शङ्के श्रवणेन्द्रियाभावात् ॥११२॥

नयनानि वहन्तु खञ्जनानामिह नानाविधमङ्गभङ्गभाग्यम् ।
सदृशं कथमाननं सुशोभं सुदृशो भङ्गुरसम्पदाम्बुजेन ॥११३॥

नयनेन्दिन्दिरानन्दमन्दिरं मिलदिन्दिरम् ।
इदमिन्दीवरं मन्ये सुन्दराङ्गि तवाननम् ॥११४॥

नयने सुदृशां पुरो रिपूणां वचने वश्यगिरां महाकवीनाम् ।
मिथिलापतिनन्दिनीभुजान्तःस्थित एव स्थितिमाप रामचन्द्रः ॥११५॥

नवप्रसङ्गं दयितस्य लोभादङ्गीकरोति स्म यदा नताङ्गी ।
श्लथं तदालिङ्गनमप्यकस्माद् घनो निनादर्घनतां निनाय ॥११६॥

नवाङ्गनेवाङ्कगतोऽपि गन्तुमेव प्रकम्पते ।
इयं सौराष्ट्रजा नारी महाभट इवोद्भटा ॥११७॥

नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे
मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति ।
अयं पततु निर्दयं दलितदृप्तभूभृद्गल-
स्खलद्रुधिरघस्मरो मम परश्वधो भैरवः ॥११८॥

निखिलजगन्महनीया यस्याभा नवपयोधरवत् ।
अम्बुजवद् विपुलतरे नयने तद् ब्रह्म संश्रये सगुणम् ॥११९॥

निखिले निगमकदम्बे लोकेष्वप्येष निर्विवादोऽर्थ ।
शिव इव गुर्गरीयान् गुरुरिव सोऽयं सदाशिवोऽपि तथा ॥१२०॥

नितरा घनमास्तुर्मयिभि क्षितिप त्वा समुपास्य यत्नत ।
निधन समलम्भि तावकी खलु सेवा जनवाञ्छितप्रदा ॥१२१॥

नितरा हिनयाद्य निद्रया मे बत यामे चरमे निवेदिताया ।
सुदृशो वचन शृणोमि यावत् मयि तावत प्रचुकोप वारिवाह ॥१२२॥

नितान्त यौवनोन्मत्ता गाढरक्ता सदाहवे ।
वसुन्धरा समालिङ्गच शरते वीर तेऽरय ॥१२३॥

नितान्तरमणीयानि वस्तूनि कदणोज्झित ।
काल सहरते नित्यमभावादिव चक्षुष ॥१२४॥

निरपाय सुधापाय पयस्तव पिबन्ति ये ।
जह्नुजे निर्जरावास वसन्ति भुवि ते नरा ॥१२५॥

निर्मलाम्बररम्यश्री किचिद्दर्शितनारका ।
हसावलीहारयुता शरद विजयतेतरान् ॥१२६॥

निशाकरादालि कलङ्कपङ्किलाद
गुणाधिक निर्मलमानन ते ।
अनल्पमाधुर्यविरोऽधरादिमा
गिरोऽधरा गुप्तरसा कवीनाम ॥१२७॥

निष्कलङ्क निरातङ्क चतु षष्टिकलाधर ।
सदापूर्ण महीप त्व चन्द्रोऽसीति मृषा वच ॥१२८॥

नीतो नासान्तिक तन्व्या मालत्या कुसुमोत्कर ।
बन्धूकभावमानिन्ये रागेणाधरवर्तिना ॥१२९॥

नृत्यत्वद्वाजिराजिप्रखरखुरपुटप्रोद्धतैर्धूलिजालै
रालोकालोकभूमीधरमतुलनिरालोकभाव प्रयाते ।
विश्रान्ति काममन्ते रजनिरिति निया भूतले सर्वलोका
कोका क्रन्दन्ति शोकानलविकलतया कि च नन्दन्त्युलूका ॥१३०॥

पञ्चशाख प्रभो यस्ते शाखा सुरतरोरसौ ।
अन्वयानेन पूर्यन्ते क्व सर्वमनोरथा ॥१३१॥

पद्मपत्त्रैर्नृणा नेत्रै सह लोकनयश्रिया ।
उन्मीलन्तो निमीलन्तो जयन्ति सवितु करा ॥१३२॥

पद्मासनप्रमुखनिर्जरचित्तवृत्ति-
दुष्प्रापदिव्यमहिमन् भवतो गुणौघान् ।
तुष्टूषतो मम नितान्तविशृङ्खलस्य
मन्तुं शिशोः शिव न मन्तुमिहासि योग्यः ॥१३३॥

परिफुल्लाब्जनयना चन्द्रिका चारुहासिनी ।
हंसावलीहारयुता शरद् विजयतेतराम् ॥१३४॥

पाण्डित्यं परिहृत्य यस्य हि कृते बन्दित्वमालम्बितं
दुष्प्रापं मनसापि यो गुरुतरैः क्लेशैः पदं प्रापितः ।
रूढस्तत्र स चेन् निगीर्य सकलां पूर्वोपकारावलीं
दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे ॥१३५॥

पूर्वं नयनयोर्लग्ना ततो मग्ना मनस्यभूत् ।
अथ सैव प्रियस्यासीत् सर्ववेदनगोचरा ॥१३६॥

प्रथमं श्रितकञ्जकोरकाभावथ शोभामनुभूय कन्दुकानाम् ।
अधुना श्रयितुं कुचौ यतेते दयिते ते करिशावकुम्भलीलाम् ॥१३७॥

प्रफुल्लकह्लारनिभा मुखश्री
रदच्छदः कुङ्कुमरम्यरागः ।
नितान्तशुद्धा तव तन्वि वाणी
विभाति कर्पूरपरम्परेव ॥१३८॥

प्रमोदभरतुन्दिलप्रमथदत्ततालावली-
विनोदिनि विनायके डमरुडिण्डिमध्वानिनि ।
ललाटतटविस्फुटज्ज्वलत्कृपीटयोनिच्छटो
हठोद्धतजटोद्भटो गतपटो नटो नृत्यति ॥१३९॥

प्राणापहरणेनासि तुल्यो हालाहलेन मे ।
शशाङ्क केन मुग्धेन सुधांशुरिति भाषितः ॥१४०॥

प्राणेशविरहात्लान्तः कपोलस्तव सुन्दरि ।
मनोभवव्याधिमत्वान् मृगाङ्कः खलु निर्मलः ॥१४१॥

प्रायः पतेद् द्यौः शकलीभवेद् ग्लौः
सहावलैरम्बुधिभिः स्खलेद् गौः ।
नूनं ज्वलिष्यन्ति दिशः समस्ता
यद् द्रौपदी रोदिति हा हतेति ॥१४२॥

बहु मन्यामहे राजन् न वयं भवतः कृतिम् ।
विपद्भिः सह दीयन्ते सम्पदो भवता यतः ॥१४३॥

बाहुजाना समस्तानामभाव इव मूर्तिमान ।
जयत्यतिबलो लोके जामदग्न्य प्रतापवान् ॥१४४॥

बुद्धिरब्धिर्महीपाल यशस्ते सुरनिम्नगा ।
कृतयस्तु शरत्कालवारुचन्द्रिरचन्द्रिका ॥१४५॥

बुद्धिर्दीपकला लोके यया सर्वं प्रकाशते ।
अबुद्धिस्तामसी रात्रियया किंचिन न भासते ॥१४६॥

ब्रह्माण्डमण्डले भान्ति न ये पिण्डीकृता अपि ।
परस्परापरिचिना वर्त्तन्ति त्वयि ते गुणा ॥१४७॥

भुजगाहितप्रवृत्तयो गारुडमन्त्रा इवावनीरमण ।
तारा इव तुरगा इव सुखलीना मन्त्रिणो भवत ॥१४८॥

भूधरा इव मत्तेभा मत्तेभा इव सूनव ।
सुता इव भटास्तस्य परमोन्नतविग्रहा ॥१४९॥

भूमीनाथ शहावदीन भवतस्तुल्यो गुणाना गणै-
रेतद्भूतभवप्रपञ्चविषये नास्तीति किं ब्रूमहे ।
धाता नूतनकारणैर्यदि पुन सृष्टि नवा भावयेत्
न स्यादेव तथापि तावक्तुलालेश दधानो नर ॥१५०॥

भूषितानि हरेर्भक्तैर्दूषितानि पराङ्मुखै ।
स्वकुल नगर देशो द्वीप सर्वा च मेदिनी ॥१५१॥

मध्येगल विहरता गरल निकाम
नागाधिप शिरसि भालतले हुताश ।
ध्याता भवज्वलनमध्यगतैस्तथापि
ताप तदेव हरते हर ते तनुश्री ॥१५२॥

मनुष्य इति मूढेन खल केन निगद्यते ।
अय तु सज्जनाम्भोजवनमत्तमतङ्गज ॥१५३॥

मन्त्रार्पितहविर्दीप्तहुताशनतनूभुव ।
शिखास्पर्शेन पाञ्चाल्या स्थाने दग्ध सुयोधन ॥१५४॥

मन्मथामात्यमायान्तमह मन्ये महामहम् ।
चक्षुश्चमत्कृति धत्ते यदहो किल कोकिल ॥१५५॥

मा कुरु कशा कराब्जे करुणावति कम्पते मम स्वान्तम् ।
खेलन् न जातु गौर्यरम्भ विलम्ब करिष्यामि ॥१५६॥

माधुर्यपरमसीमा सारस्वतजलधिमथनसम्भूता ।
पिबतामनल्पसुखदा वसुधायां ननु सुधा कविता ॥१५७॥

मामनुरक्तां हित्वा यदि राजन् पुरुषसिंह यातोऽसि ।
मुक्त्वा वनमिदमेष्यति वनलक्ष्मीमत्र किं चित्रम् ॥१५८॥

मां पाहीति विधिविधेयविषयो वाच्यः स्वतन्त्रे कथं
नोपेक्ष्यो भवतास्मि दीन इति गीः श्लाघ्या न संख्यावताम् ।
एवं दोषविचारणाकुलतया देव त्वयि प्रोन्मुखे
वक्तव्यप्रतिभादरिद्रमतयः किंचिन् नहि ब्रूमहे ॥१५९॥

मित्रात्रिपुत्रनेत्राय त्रयीशात्रवशत्रवे ।
गोत्रारिगोत्रजत्राय गोत्रात्रे ते नमो नमः ॥१६०॥

मुकुलितनयनं करिणो गण्डं कण्डूयतो विषद्रुतटे ।
उदभूदकाण्डदहनज्वालाजालाकुलो देहः ॥१६१॥

यस्य तुलामधिरोहसि लोकोत्तरवर्णपरिमलोद्गारैः ।
कुसुमकुलतिलक चम्पक न वयं तं जातु जानीमः ॥१६२॥

युक्तं तु याते दिवमासफेन्दौ तदाश्रितानां यदभूद् विनाशः ।
इदं तु चित्रं भुवनावकाशे निराश्रया खेलति तस्य कीर्तिः ॥१६३॥

रमणीयस्तबकयुता विलसितवक्षोजयुगलशालिन्यः ।
लतिका इव ता वनिता वनिता इव रेजिरे लतिकाः ॥१६४॥

रम्यहासा रसोल्लासा रसिकालिनिषेविता ।
सर्वाङ्गशोभासम्भारा पद्मिनी कस्य न प्रिया ॥१६५॥

रवितुरगदिग्गजेषु स्वर्णाचलजलधिधनदकोषेषु ।
सत्स्वेव राजपुङ्गव किं दातास्मीति गर्वमावहसि ॥१६६॥

रागं विना विराजन्ते मुनयो मणयस्तु न ।
कौटिल्येन विना भाति नरो न कबरीभरः ॥१६७॥

राजन् प्रचण्डमार्तण्डमण्डलोद्दण्डशासन ।
कथमकूरसत्त्वस्त्वं पयोधिरिव गीयसे ॥१६८॥

लङ्कापुरादतितरां कुपितः फणीव निर्गत्य जातु पृतनापतिभिः परीतः ।
क्रुद्धं रणे सपदि दाशरथिं दशास्यः संरब्धदाशरथिदर्शमहो ददर्श ॥१६९॥

लता कुसुमभारेण शीलभारेण सुन्दरी ।
कविता चार्थभारेण श्रयते कामपि श्रियम् ॥१७०॥

लावण्येन प्रमदा मदातिरेकेण वारणाधिपति ।
भाति विभवेन भवकान् राजन् भवता च वसुमतीवलयम् ॥१७१॥

लोहितपीतैः कुसुमैरावृतमाभाति भूभृत शिखरम् ।
दावज्वलनज्वालै कदाचिदाकीर्णमिव समये ॥१७२॥

वचने तव यत्र माधुरी सा हृदि पूर्णा करुणा च कोमलेऽभूत् ।
अधुना हरिणाक्षि हा कथ वा कटुता तत्र कठोरताविरासीत् ॥१७३॥

वदन विना सुकविता सदन साध्वीं विना वनिताम् ।
राज्य च विना धनिता न नितान्त भवति कमनीयम् ॥१७४॥

वराका य राकारमण इति वल्गन्ति सहसा
सर स्वच्छ मन्ये मिलदमृतमेतन मखभुजाम् ।
अमुष्मिन् या कापि द्युतिरतिघना भाति मिवता-
मिय नीलच्छायादुपरि निरपायाद गगनत ॥१७५॥

वसु दात् यशो धातु विधातुमरिमर्दनम् ।
त्रातु च मादृशान् राजन्नतीव निपुणो भवान् ॥१७६॥

वसुधावलयपुरदर विलसति भवत कराम्भोजे ।
चिन्तामणिकल्पद्रुमकामगवीभि कृत जगति ॥१७७॥

वागिव मधुरा मूर्तिर्मूर्तिरिवात्यन्तनिर्मला कीर्ति ।
कीर्तिरिव जगति सर्वस्तवनीया मतिरमुष्य विभो ॥१७८॥

वामाकल्पितवामाङ्गो भासते भाललोचन ।
शम्पया सपरिष्वक्तो जीमूत इव शारद ॥१७९॥

वारिधिराकाशसमो वारिधिसदृशस्तथाकाश ।
सेतुरिव स्वर्गङ्गा स्वगङ्गेवान्तरा सेतु ॥१८०॥

विज्ञत्व विदुषा गणे सुकविता सामाजिकाना कुले
माङ्गल्य स्वजनेषु गौरवमयो लोकेषु सर्वेष्वपि ।
दुर्वृत्तेऽशनिता नृलोकवलये राजत्वमव्याहत
मित्रत्व च वहन्नकिंचनजने देव त्वमेको भुवि ॥१८१॥

विद्धा मर्मणि वाग्बाणैर्घूर्णन्ते साधव खलैः ।
सद्भिर्वचोऽमृतै सिक्ता पुन स्वस्था भवन्ति ते ॥१८२॥

विद्वत्सु विमलज्ञाना विरक्ता यतिषु स्थिता ।
स्त्रीयेषु तु गरोद्गारा नानाकारा क्षितौ खला ॥१८३॥

विमलतरमतिगभीरं सुपवित्रं सत्त्ववत् सुरसम् ।
हंसावासं स्थानं मानसमिह शोभते नितराम् ॥१८४॥

विमुञ्चसि यदि प्रिय प्रियतमेति मां मन्दिरे
तदा सह नयस्व मां प्रणययन्त्रणायन्त्रितः ।
अथ प्रकृतिभीरुरित्यखिलभीतिभङ्गक्षमान्
न जातु भुजमण्डलादवहितो बहिर्भावय ॥१८५॥

विष्णुवक्षःस्थितो भाति नितरां कौस्तुभो मणिः ।
अङ्गारक इवानेकतारके गगनाङ्गणे ॥१८६॥

व्योमाङ्गणे सरसि नीलिमदिव्यतोये
तारावलीमुकुलमण्डलमण्डितेऽस्मिन् ।
आभाति षोडशकलादलमङ्कभृङ्गं
सूराभिमुख्यविकचं शशिपुण्डरीकम् ॥१८७॥

शरदिन्दुरिवाह्लादजनको रघुनन्दनः ।
घनत्यजा विभाति स्म सेन्द्रचाप इवाम्बुदः ॥१८८॥

शरीरं ज्ञानजननं रोगो विष्णुस्मृतिप्रदः ।
विपद् वैराग्यजननी त्रयं सुखकरं सताम् ॥१८९॥

शान्तिमिच्छसि चेदाशु सतां वागमृतं शृणु ।
हृदये धारणाद् यस्य न पुनः खेदसंभवः ॥१९०॥

शीलभारवती कान्ता पुष्पभारवती लता ।
अर्थभारवती वाणी भजते काममि श्रियम् ॥१९१॥

शैत्यं विना न चन्द्रश्रीर्न दीपः प्रभया विना ।
न सौगन्ध्यं विना भाति मालतीकुसुमोत्करः ॥१९२॥

श्येनमम्बरतलादुपागतं शुष्यदाननमितो विलोकयन् ।
कम्पमानतनुराकुलेक्षणः स्पन्दितुं नहि शशाक लावकः ॥१९३॥

श्रोतातपादैर्विहिते निबन्धे निरूपिता नूतनयुक्तिरेषा ।
अङ्गं गवां पूर्वमहो पवित्रं न वा कथं रासभधर्मपत्न्याः ॥१९४॥

सदसद्विवेकरसिकैरालोच्य समस्तलोकमथ कविभिः ।
गणिता गगनलतादेर्गणनायां तन्वि तव सदृशी ॥१९५॥

सदृशी तव तन्वि निर्मिता विधिना नेति समस्तसंमतम् ।
अथ चेन् निपुणं विभाव्यते मतिमारोहति कौमुदी मनाक् ॥१९६॥

सदैव स्नेहार्द्रे सुरतटिनि निष्किचनजने
यदि त्व नाधत्से सुरभिरिव वत्से मयि कृपाम ।
तदा चिन्तारत्नत्रिदशपतिभूमीरुहमुखा
ददीरर्थिभ्य किमिति कणभिक्षामपि जडा ॥१९७॥

स पण्डितो य स्वहितार्यदर्शी हित च तद यत्र परानपक्रिया ।
परे च ते ये श्रितसाधुभावा सा साधुता यत्र चकास्ति केशव ॥१९८॥

सपदा सपरिप्वक्तो विद्यया चानवद्यया ।
नरो न शोभते लोके हरिभक्तिरस विना ॥१९९॥

सरसिजवनबन्धुश्रीसमारम्भकाले
रजनिरमणराज्य नाशमाशु प्रयाति ।
परमपुरुषवक्त्रादुद्गताना नराणा
मधुमधुरगिरा च प्रादुरासीद् विनोद ॥२००॥

सम्भूत्यर्थं सकलजगतो विष्णुनाभिप्रपन्न
यन्नाल स त्रिभुवनगुरुर्वेदनाथो विरिञ्चि ।
घ्येय धन्यालिभिरतितरा स्वप्रकाशस्वरूप
पद्माख्य तत् किमपि ललित वस्तु वस्तुष्टयेऽस्तु ॥२०१॥

सरसि प्लवदाभाति जम्बीर सुपचेलिमम ।
आदिकारणतोयौघ इव ब्रह्माण्डमण्डलम् ॥२०२॥

सर्प इव शान्तमूर्ति श्वेवाय मानपरिपूर्ण ।
क्षीव इव सावधानो मर्कट इव निष्क्रियो नितराम् ॥२०३॥

ससारे चेतनास्तत्र विद्वासस्तत्र साधव ।
सायुष्वपि स्पृहाहीनास्तेषु धन्या निराशया ॥२०४॥

साम्राज्यलक्ष्मीरियमृष्यकेतो सौन्दर्यसृष्टेरधिदेवता वा ।
रामस्य रामामवलोक्य लोकरिति स्म दोला रुरुहे तदानीम् ॥२०५॥

साहकारसुरासुरावलिकराकृष्टभ्रमन्मन्दर-
क्षुभ्यत्क्षीरधिवल्गुवीचिवलयश्रीगर्वसर्वकषा ।
तृष्णाताम्यदमन्दतापसकुलै सानन्दमालोकिता
भूमीभूषण भूषयन्ति भुवनाभोग भवत्कीतय ॥२०६॥

सिन्दूरारुणवपुषो देवस्य रदाङ्कुरो गणाधिपते ।
सन्ध्याशोणाम्वरगतनवेन्दुलेखायित पातु ॥२०७॥

सुजनाः परोपकारं शूराः शस्त्रं धनं कृपणाः ।
कुलवत्यो मन्दाक्षं प्राणात्यय एव मुञ्चन्ति ॥२०८॥

सुधायाश्चन्द्रिकायाश्च संजीविन्या महौषधेः ।
दयादृष्टेश्च ते राजन् विश्वसंजीवनं गुणः ॥२०९॥

सुधासमुद्रं तव रम्यवाणी वाचं क्षमाचन्द्र सुधासमुद्रः ।
माधुर्यमध्यापयितुं दधाते खर्वेतरामान्तरगर्वमुद्राम् ॥२१०॥

सुराङ्गनाभिराश्लिष्टा व्योम्नि वीरा विमानगाः ।
विलोकन्ते निजान् देहान् फेरुनारीभिरावृतान् ॥२११॥

सुराणामारामादिह झगिति झञ्झानिलहताः
  पतेयुः शाखीन्द्रा यदि तदखिलो नन्दति जनः ।
किमेभिर्वा कार्यं शिव शिव विवेकेन विकलैः
  चिरं जीवन्नास्तामधिधरणि दिल्लीनरपतिः ॥२१२॥

सुवर्णस्य कृते तन्वि देशं देशमटाम्यहम् ।
तस्य दुष्प्रापताहेतोश्चिन्ताक्रान्तं मनो मम ॥२१३॥

सूर्याचन्द्रमसौ यस्य वासो रञ्जयतः करैः ।
अङ्गरागं सृजत्यग्निस्तं वन्दे परमेश्वरम् ॥२१४॥

स्तनान्तर्गतमाणिक्यवपुर्बहिरुपागतम् ।
मनोऽनुरागि ते तन्वि मन्ये वल्लभमीक्षते ॥२१५॥

स्मरदीपदीप्तदृष्टेर्घनान्धकारेऽपि पतिगृहं यान्त्याः ।
झटिति प्रादुरभूवन् सख्यादिव चञ्चलाः परितः ॥२१६॥

स्वर्गनिर्गतनिरर्गलगङ्गातुङ्गभङ्गुरतरङ्गसखानाम् ।
केवलामृतमुचां वचनानां यस्य लास्यगृहमास्यसरोजम् ॥२१७॥

स्वर्णोपसर्गो खलु दानलक्ष्मीर्दानं प्रसूते विपुला समृद्धिः ।
समृद्धिमल्पेतरभागधेयं भाग्यं च शम्भो तव पादभक्तिः ॥२१८॥

हतकेन मया वनान्तरे वनजाक्षी सहसा विवासिता ।
अधुना मम कुत्र सा सती पतितस्येव परा सरस्वती ॥२१९॥

हरिः पिता हरिर्माता हरिर्भ्राता हरिः सुहृत् ।
हरिं सर्वत्र पश्यामि हरेरन्यन् न भाति मे ॥२२०॥

हरिकरसङ्गादधिकं रमणीयाप्यनुलरागसंवलिता ।
मुरारिर तवाननापि कमलाभा विगलितप्रतिभा ॥२२१॥

हरिचरणकमलनखगणकिरणश्रेणीव निर्मला नितराम् ।
शिशिरयतु लोचन मे देवव्रतपुत्रिणी देवी ॥२२२॥

हरिचरणनखरसङ्गादेके हरमूर्धसंस्थितेरन्ये ।
त्वा प्राहु पुण्यतमामपरे सुरतटिनि वस्तुमाहात्म्यात् ॥२२३॥

हरिमागतमाकर्ण्य मथुरामन्तकान्तकम् ।
कम्पमान श्वसन् कसो निपपात महीतले ॥२२४॥

हरिश्चन्द्रेण सञ्जप्ता प्रगीता धर्मसूनुना ।
खेलन्ति निगमोत्सङ्गे मातर्गङ्गे गुणास्तव ॥२२५॥

हर्षयन्ति क्षणादेव क्षणादेव दहन्ति च ।
यून स्मरपराधीनान् निर्दया हन्त योषित ॥२२६॥

हालाहलकालानलकाकोदरसगति करोति विधु ।
अभ्यसितुमिव तदीया विद्यामद्यापि हरशिरसि (गत) ॥२२७॥

हिंसाप्रधानै खलु यातुधानै-
र्यातीयतापावनता सदैव ।
रामाङ्घ्रियोगादय सापि वन्या
विन्ध्यस्य धन्यास्त मुने सतीव ॥२२८॥

हीरस्फुरद्दशनशुभ्रिमशोभि किं च
सान्द्रामृत वदनमेणविलोचनाया ।
वेधा विधाय पुनरुक्तमिवेन्दुबिम्ब
दूरीकरोति न कथ विदुषा वरेण्य ॥२२९॥

---

# (१२) प्राणाभरणम् [जगदाभरणम्]

विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः ।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरीमधरयन् वाचां विलासो मम ॥१॥

विद्वास इत्यादि प्रायदर्शनाभिप्रायमेतत्, तेन सहृदयैर्न मनागपि विमनायितव्यम् । भावध्वनिश्चायम् । उत्तरार्धप्रतिपाद्यार्थालम्बनाया एतत्पद्यप्रयोगानुभावायाः कविगतचिन्तायाः प्राधान्येनाभिव्यक्ते । अनुपात्तोभयनिमित्तको व्यतिरेक स्फुटोऽलङ्कारः । कामालसत्वं वामाविशेषणमधरमाधुरीप्रकर्षकम् ॥१॥

विद्वार्णव गुणज्ञता समुदितो भूयानसूयाभरः
कालोऽयं कलिराजगाम जगतीलावण्यकुक्षिम्भरिः ।
एवं भावनया मदीयकविते मौनं किमालम्बसे
[1] जागर्तु क्षितिमण्डले चिरमिह श्रीकामरूपेश्वरः ॥२॥
[[1] जगदा० जागर्तु क्षितिमण्डलोपरि जगत्सिंहो धराधीश्वरः । ]

कविगतराजविषयकरतिभावध्वनिश्चायम् । इत ऊर्ध्वमयमेव आचरमपद्यमनुवर्तिष्यते । अस्याश्चात्र मौनानुभावितो वर्णनीयालम्बनो निर्वेदो गुण इति प्रेयोऽलङ्कारास्पदम् । अत्र च अचेतनायां कवितायां चेतनत्वाध्यवसायमूला असम्बन्धे सम्बन्धात्मिका अतिशयोक्तिर्विवक्षिता । तेन भावनामौननिर्वेदाना सम्बोधनस्य च नानुपपत्तिः ॥२॥

पारीन्द्राणां घुरीणैरवनिधरगुहागर्भतः प्रोत्पतद्भिः
स्वापभ्रंशापराधप्रचलितनयनप्रान्तमाकर्ण्यमानः ।
रत्नप्रस्थानान्तरुद्यत्प्रलयजलधरध्वानधिक्कारधीरो
घृष्टक्षीरोदतीरो जगति विजयते दुन्दुभिद्वन्द्वनादः ॥३॥

अत्र राजालम्बनस्य तादृशनादश्रवणोद्दीपितस्य नयनप्रचलनानुभावितस्य गिरिगुहागर्भोत्पतनाभिव्यक्तेनामर्षेण सञ्चारिणा परिपोषितस्य पारीन्द्रगतोत्साहस्य स्थायिनो राजविषयकरतिभावाङ्गत्वात् रसालङ्कारत्वम् । यदाहुः—"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः । काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥" इति । तृतीयचतुर्थचरणयोस्तु स्फुटावेव व्यतिरेकातिशयौ । घृष्टपदेन तादृशनादो वेलाचलप्रतिबद्धत्वादग्रे न गतोऽन्यथा तु लोकालोकाचलमपि स्पृशेदिति भावो गम्यते । अत एव मृष्टेति नोक्तम् । तथा सति शैथिल्यप्रसङ्गापत्तेः ॥३॥

किं ब्रूमस्तव वीरतां वयममी यस्मिन् धराखण्डल
क्रीडाकुण्डलितभ्रु शोणनयने दोर्मण्डलं पश्यति ।

[1] माणिक्यावलिकान्तिदन्तुरतरैर्भूषासहस्रोत्करै-
विन्ध्यारण्यगुहागृहावनिरुहास्तत्कालमुल्लासिताः ॥४॥

[ [1] जगदा० नानाभूषणरत्नजालजटिलास्तत्कालमेवाभवन्
विन्ध्यक्ष्माधरगन्धमादनगुहासम्बन्धिनो भूरुहाः ॥ ]

अत्र विन्ध्यारण्यगताना गुहागृहाणामवनिरुहाणां च विन्ध्यगतानां गुहागृहाणामरण्यगतानामवनिरुहाणा च वा भूषणेन कार्येणाप्रस्तुतेन त्वदरिनारीणां स्वनगराणि परित्यज्य निशि गुहागृहेषु तरुतलेषु च विन्यस्य सकलाभरणानि कृतशयनाना प्रातस्त्वदागमनसंभ्रमेण तत्कर्मकं विस्मरणं भारवशात् परित्यागो वा प्रस्तुतो गम्यत इत्यप्रस्तुतप्रशंसा । कार्यस्य यथाकथचित् प्रस्तुतत्वे तु पर्यायोक्तमलङ्कारः ॥४॥

माहात्म्यस्य परोऽवधिर्निजगृहं गम्भीरतायाः पिता
रत्नानामहमेक एव भुवने को वाऽपरो मादृशः ।
इत्येवं परिचिन्त्य मा स्म सहसा गर्वान्धकारं गमो
दुग्धाब्धे भवता समो विजयते [1]श्रीप्राणनारायणः ॥५॥

[ [1] जगदा० श्रीकर्णजन्मार्णवः । रसगङ्गा० दिल्लीधरावल्लभः । ]

अत्रोपमानस्य गुणविशेषप्रयुक्तसादृश्याभावनिबन्धनमुत्कर्षं परिहर्तुं वर्ण्यमानतादृशसादृश्यात्मकः प्रतीपालङ्कारस्य भेदः । स चोपमाविशेष इत्येके । विच्छित्तिवैलक्षण्यादतिरिक्त एवेत्यपरे ॥५॥

त्वत्तो जन्म सितांशुशेखरतनुज्योत्स्नानिमग्नात्मनो
दुग्धाम्भोनिधिमुग्धवीचिवलयैः साकं परिक्रीडनम् ।
संवासः सुरलोकसिन्धुपुलिने वादः सुधांशोः करैः
कस्मान् नोज्वलिमानमञ्चतितमां देव त्वदीयं यशः ॥६॥

अत्र यशसि धवलतातिशयस्तद्धर्मिसम्बन्धप्रयुक्तत्वेन कथित इति समस्य विषयः । अंशुकृतश्चन्द्रे तत्कृतश्च भगवति भगवत्कृतश्च राजनीत्येवमुत्तरोत्तरमुपचीयमानो राजगत उत्कर्षः प्रतीयत इति सारविषयः । वस्तुतस्त्वनुक्तत्वात् प्रौढोक्तिरेवेति ॥६॥

आबध्नास्यलकानिरस्यसितमां घोलं रसाकाङ्क्षया-
लङ्कायामयतां तनोषि कुरुषे उत्पालकालम्बनम् ।
प्रत्यङ्गं परिमर्दनिर्दयमहो चेतः समालम्बसे
वामानां विषये नृपेन्द्र भवतः प्रागल्भ्यमत्यद्भुतम् ॥७॥

अत्र प्रकृतधर्मिगतयो प्रकृताप्रकृतयो प्रकृतयोरेव वा वृत्तान्तयो श्लेषः । स च यद्गु स्थलेषु शब्दनानात्वनिबन्धनो द्वयोरर्थनानात्वनिबन्धनः । द्वावप्येतौ शब्दालङ्काराविति प्राञ्चः । आद्यो जतुकाष्ठन्यायेन शब्दश्लेषनाम्नालङ्कारो द्वितीयस्त्वेकवृन्तगतफलद्वयन्यायेनार्थश्लेषणादर्थालङ्कार इति नव्याः ॥७॥

देव त्वां परितः स्तुवन्तु कवयो लोभेन किं तावता
स्तुत्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽमुना ।

क्रोडान्त· कुरुतेतरां वसुमतीमाशा· समालिङ्गति
द्या चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥८॥

अत्र प्रतापगत पृथिव्यादिसम्बन्धो लिङ्गविशेषावच्छिन्नतत्साधारणविशेषणाभिव्यक्तकामुकवृत्तान्ताभिन्नतया स्थित इति समासोक्ति, कार्यरूपधर्मप्रयुक्तशुद्धसाधारण्येन च विशेषणसाम्यमालम्ब्य प्रवृत्ता, सा च निन्दोन्यापकत्वाद् व्याजस्तुतौ गुण ॥८॥

लोकाना विपद घुनोषि तनुषे सम्पत्तिमत्युत्कटा-
मित्यल्पेतरजल्पितैर्जडधिया भूपाल मा गा मदम् ।
यत् कीर्तिस्तव वल्लभा लघुतरब्रह्माण्डभाण्डोदरे
पिण्डीकृत्य महोन्नतामपि तनु कष्टेन हा वर्तते ॥९॥

अत्रापि प्राग्वत् । पर त्वाधाराधेयान्यतरविस्तरत्वसिद्धिकृतकान्यतरन्यूनत्वकल्पनात्माधिकालङ्कारोऽपि तस्या गुण ॥९॥

क्षोणीं शासति मय्युपद्रवलव· कस्यापि न स्यादिति
प्रौढ व्याहरतो वचस्तव कथ देव प्रतीमो वयम् ।
प्रत्यक्ष भवतो विपक्षनिवहैर्यामुत्पतद्भि कृधा
यद् युष्मत्कुलकोटिमूलपुरुषो निर्भिद्यते भास्कर ॥१०॥

इह त्वधिकसमासोक्तिभ्यामनालिङ्गितैव सा (व्याजस्तुति) ॥१०॥

आस्वादेन रसो रसेन कविता काव्येन वाणी तया
लोकान्त करणानुरागरसिक सभ्य सभा चामुना ।
दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर
क्षोणीनाथ तया भवाश्च भवता भूमण्डल भासते ॥११॥

मालादीपकमेतदिति प्राञ्च । दीपकस्य सादृश्यमूलकतानियमाद्वेद दीपकम् अपित्वेकावलीभेद इति तु वयम् ॥११॥

अम्लायन् यदरातिकैरवकुलान्यम्लासिषु सत्वर
दैन्यध्वान्तकदम्बकानि परितो नेशुस्तमा तानसा ।
सन्मार्गा प्रसरन्ति साधुनलिनान्युल्लासमातन्वते
तन् मन्ये भवत प्रतापतपनो देव प्रभातोन्मुख ॥१२॥

इह रूपकनिष्पादितलिङ्गकमनुमान निमित्तविरहादुत्प्रेक्षाया अयोगाद । वाचकमनुमितिपरम् ॥१२॥

उत्क्षिप्ता कबरीभर विवलिता· पार्श्वद्वय न्यक्कृता·
पादाम्भोजयुग रुषा परिहृता दूरेण चेलाञ्चलम ।
गृह्णन्ति त्वरया भवत्प्रतिभटक्ष्मापालवामभ्रुवा
यान्तीना गहनेषु कण्टकचिता· के के न भूमीरुहा ॥१३॥

अत्र कण्टकचितत्वेन कबरीग्रहणादे सङ्कीर्णत्वात् कार्यधर्मान्तरसकीर्णशुद्धसाधारण्येन विशेषणसाम्यमालम्ब्य प्रवृत्ता समासोक्ति ॥१३॥

दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डाशुग-
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ।
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥१४॥

अत्र स्मरणालङ्कारः । भाव इति तु न भ्रमितव्यम । सादृश्यमूलकत्वतदमूलकत्वाभ्यां भावत्वालङ्कारत्वयोरिह व्यवस्थितेः । शब्दवेद्यत्वाच्च ॥१४॥

सृष्टः सृष्टिभुवा पुरा किल परित्रातुं जगन्मण्डलं
त्वं चण्डातप निर्दयं तपसि यज् ज्वालाजटालैः करैः ।
संरम्भारुणलोचनो रणभुवि प्रस्यातुकामोऽधुना
जानीमो भवता न हन्त [1] विदितः श्रीकामरूपेश्वरः ॥१५॥

[ [1.] रसगङ्गा० विदितो दिल्लीधरावल्लभः । ]

अत्र राजवर्णनाङ्गत्वेन रवेर्भयोत्पादने वर्ण्यत्वेन प्रस्तुते साक्षात्तदननुगुणत्वेनाप्रस्तुतेन प्रस्थानेन साक्षात्तदनुगुणं रिपुकर्तृक सूर्यमण्डलभेदनं कार्यं गम्यते ॥१५॥

आयाता कमलासनस्य भवनाद् द्रष्टुं त्रिलोकीतलं
गीर्वाणेषु दिनानि कानिचिदयो नीत्वा पुनः कौतुकात् ।
भ्रान्त्वा भूवलये महाकविकुलोपास्या तवास्याम्बुजे
राजन् सम्प्रति सत्यधामनि गिरां देवी सुखं वर्तते ॥१६॥

[उपरिलिखितौ इमौ द्वौ श्लोकौ पूनास्थभाण्डारकरप्राच्यसंशोधनमन्दिरस्य-हस्तलिखितप्राणाभरणे नोपलभ्येते । ]

अत्रैकस्याधेयस्यानेकाधारसम्बन्धात् पर्यायः । तत्र प्रथमचरणगतमधिकरणमार्यम् । विश्लेषावधिपञ्चम्या विश्लेषस्योपश्लेषापेक्षत्वेनौपश्लेषिकाधिकरणस्याक्षेपगम्यत्वात् । सत्यधामनीति श्लेषभित्तिकाभेदाध्यवसानेन मुखस्य सत्यलोकतासिद्धौ सुखवर्तनसिद्धिः ॥१६॥

दृष्टिः सम्भृतमङ्गला बुधमयी देव त्वदीया सभा
काव्यस्याश्रयभूतमास्यमरुणाधारोऽधरः सुन्दरः ।
क्रोधस्तेऽशनिभूरुदारधिषणा स्वान्तं तु सोमास्पदं
राजन् नूनमनूनविक्रम भवान् सर्वग्रहालम्बनम् ॥१७॥

विशेषणीभूताना मङ्गलादीना श्लेषेणाभेदसम्पादनद्वारा तादृग्धर्मसाधारणतासम्पत्तौ तन्निमित्तकोत्प्रेक्षासिद्धिः ॥१७॥

विद्वद्दैन्यतमस्तिरस्कृतिरथवा धरेन्द्रवंशाटवी-
दावाग्निः किमहो महोज्ज्वलयशःशीतांशुदुग्धाम्बुधिः ।
किं वानङ्गभुजङ्गदष्टवनिताजीवातुरेयं नृणां
येषामेव नराधिपो न जनयत्यल्पेतराः कल्पनाः ॥१८॥

अत्र कोटीनामारोपान्तरमूलत्वात् परम्परितरूपकमूलः ससंदेहः । स चाहार्यः मूलारोपस्य तथात्वात् क्वापि कविनिबद्धप्रमातन्तरेऽप्याहार्यत्वेऽविरोधात् ॥१८॥

नदन्ति मददन्तिनः परिलसन्ति वाजिव्रजाः
पठन्ति विरुदावलीमहितमन्दिरे बन्दिनः ।
इदं तदवधि प्रभो यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युति ॥१९॥

अत्र मुख्यार्थस्य राजविषयाया कविरनेरस्कारकस्य यदैव तव कोपोदयस्तदैव तव रिपूणा सम्पदो भस्मसाद् भविष्यन्तीति वस्तुन उपस्कारिका नयनकोणशोणद्युतेर्युगान्तदहनोपमा ॥१९॥

मयि त्वदुपमाविधौ वसुमनीश वाचंयमे
न वर्णयति मामसौ न्वविरिति क्रुध मा कृथा ।
चराचरमिदं जगज्ज जनयतो विधेर्मानसे
पदं न विदधेतरा तव खलु द्वितीयो नर. ॥२०॥

अत्र त्वत्समो नास्तीति प्रत्ययादुपमानलुप्तोपमा व्यङ्ग्येति प्राञ्च । सर्वत्रैव साम्यस्याप्रतिष्ठानान्नेयमुपमा । अन्यथा व्यतिरेकस्यापि तत्त्वापत्ते । 'ढुंढोल्लन्तो मरिससि कटककलिआइ केअइवणाइ । मालइकुसुमसरिच्छ भमर भमतो ण पावेसि ॥' इत्यत्र तु न प्राप्स्यसीत्युक्त्वा क्वचित् त्वदगोचरे स्थले भवष्यतीति प्रतीते सादृश्यपदप्रतिष्ठानाल्लुप्तोपमास्तु । तस्मादसमालङ्कार एवायमिति तु नव्या ॥२०॥

भुजभ्रमितपट्टिशोद्दलितदृप्तदन्तावलं
भवन्तमरिमण्डलक्ष्यन पश्यतः सङ्गरे ।
करालकुलिशाहतिस्फुटविभिन्नविन्ध्याचलो
न कस्य हृदयं झगित्यधिरुरोह जम्भाहितः ॥२१॥

अत्रापि स्मरणालङ्कार परन्तु लक्ष्य ॥२१॥

यमः प्रतिमहीभृता हुतवहोऽसि तन्नोवृता
सतां खलु युधिष्ठिरो धनपनिर्धनाकाङ्क्षिणाम् ।
गृह शरणमिच्छता कुलिशकोटिभिर्निर्मित
त्वमेक इह भूतले बहुविधो विधात्रा कृत ॥२२॥

अत्र कविना यमत्वादिना रूपेण राज्ञो रूपवन्वरणाद्रूपकेण विपक्षभूपालादीनामेतस्मिन्नागते यमत्वादिना भ्रान्तैरपि सम्भवाल् भ्रान्तिमता तैरेवानेकै ग्रहीतृभिर्यमत्वादिकैर्धर्मैरुल्लेखनादुल्लेखविशेषेण च मह सङ्कीर्णोऽत्र सम्बन्धिषष्ठ्यन्तभेदप्रयुक्तवर्ण्यानेकविधत्वक उल्लेख ॥२२॥

द्विनेत्र इव वासवः करयुगो विवस्वानिव
द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव ।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो
नुतो निखिलभूसुरै[1]र्जयति [2]कामरूपेश्वरः ॥२३॥

[ [1] जगदा० विजयते जगत्केसरी । [2] रसगङ्गा० कोऽपि भूमीपतिः । ]

अत्र राजगताना द्विनेत्रत्वादीनां वासवादितादात्म्यविरोधिनां विरोधनिवर्तनाय विम्बेषु वासवादिष्वारोपेण साधारणीकरणात् तन्निमित्तकोत्प्रेक्षा । सा चेह मालारूपा । न चात्रोपमा शक्यनिरूपणा । द्विनेत्रत्वाद्युक्तेर्निष्प्रयोजकत्वापत्तेः । न चोपमानिष्पादकं तेषां साधारण्यं तदभावेऽपि परमैश्वर्यादिभिस्तस्याः प्रतीयमानैर्निष्पत्तेः । असुन्दरत्वेन उपमानिष्पादकतया कवेरनभिप्रेतत्वाच्च । एवं द्वितीयस्वादीनां चन्द्रादिष्वारोपोऽप्युपमायां सत्यामनर्थक एव स्यात् ॥२३॥

दीनत्राते दयार्द्रा निखिलरिपुकुले निर्दया किं च मुद्री
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना ।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कान्दिशीका
राजन्राजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः ॥२४॥

अत्र विषयानेकत्वप्रयुक्तं चित्तवृत्तेरनेकविधत्वमित्युल्लेखः । तत्र च तदीयचित्तवृत्तित्वेनैकत्वाध्यवसानं तन्त्रम् ॥२४॥

देवाः के पूर्वदेवाः समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत् प्रतिभटपृतनावर्तिनः क्षत्रवीराः ।
यावन् नायाति राजन् नयनविषयतामन्तकत्रासिमूर्त-
र्मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजङ्गः ॥२५॥

अत्र शुद्धपरम्परितरूपकम् ॥२५॥

प्राची सन्ध्या समुद्यन्महिमदिनमणेर्नर्मनमाणिक्यकान्ति-
र्ज्वालामाला कराला कवलितजगतः क्रोधकालानलस्य ।
आशा कान्तापदाम्भोरुहतलविगलन्मञ्जुलाक्षारसानां
[1] सा भाति क्षोणिशोभाकरण तव दृशोः सङ्गरे शोणिमश्रीः ॥२६॥

[ [1] रसगङ्गा० क्षोणीन्द्रो सङ्गरे ते लसति नयनयोरुद्भटा शोणिमश्रीः ॥]
अत्रापि तदेव परन्तु मालात्मकम् ।

(अस्य पद्यस्य पूनास्यभाण्डारकरसंशोधनमन्दिरस्यहस्तलिखिते ग्रन्थे व्याख्या नास्ति)
॥२६॥

त्वां सुन्दरीनिवहनिष्ठुरधैर्यगर्व-
निर्वासनैकरसिकं समरे निरीक्ष्य ।
[1] केषामरिक्षितिभृतां नवराज्यलक्ष्मीः
स्वामिव्रतावमपरिस्खलितं बभार ॥२७॥

[ [1] जगदा० का वा रिपुक्षितिभृतां ]

अत्र शत्रूणां राज्यलक्ष्मीस्त्वां प्राप्नोति विवक्षितोऽर्थः पातिव्रत्यस्खलनरूपेणाभिहित इति पर्यायोक्तम् । तच्च राज्यलक्ष्म्या नायिकात्वनिगदपर्यं समासोक्तिमपेक्षत इति सा तत्र गुणः ॥२७॥

नासत्ययागो वचनेषु कीर्तौ तथार्जुनः कर्मणि चापि धर्मः ।
चित्ते जगत्प्राणभवो यदास्ते वशवदास्ते किमु पाण्डुपुत्रा ॥२८॥

अत्र पाण्डुपुत्रेषु विषयेषु राजवशवदतादात्म्योत्प्रेक्षाया राजाभिन्नत्वरूपो विषयिधर्म श्लेषेण विषयाणा राजाभिन्नाना चासत्याभावशुक्लगुणपुण्यपरमेश्वराणामभेदसम्पादनद्वारा विषयसाधारणीकृत. ॥२८॥

मन्थाचलभ्रमणवेगवशंवदा ये
दुग्धाम्बुधेरुदपतन्नणवः सुधायाः ।
तैरेकतामुपगतैर्विविधौषधीभि-
र्धाता ससर्ज तव देव दयादृगन्तान् ॥२९॥

अत्र दृगन्तेषु न केवल सजीवकत्वादयोऽमृतमात्रगुणा एव कवेर्बुबोधयिषिता अपितु निखिलजनवशीकारकत्वादयोऽन्येऽपीति सुधाकणेष्वोषधीसंसर्गो विशेषणतया अतिशयार्थ-मुपात्त इति प्रौढोक्ति ॥२९॥

केशैर्वधूनामथ सर्वकोषं प्राणैश्च साकं प्रतिभूपतीनाम् ।
त्वया रणे निष्करुणेन गाढ चापस्य जीवा चकृषे जवेन ॥३०॥

अत्र चापकर्षणकार्याणा केशाकर्षणादीना पौर्वापर्यविपर्ययात्मनातिशयेनानुप्राणिता सहोक्तिः ॥३०॥

महेन्द्रतुल्यं कवयो भवन्तं वदन्तु किं तानिह वारयामः ।
भवान् सहस्रैः समुपास्यमान. कथं समानस्त्रिदशाधिपेन ॥३१॥

अत्र श्लेषोत्थापितत्रिदशत्वसस्यामादाय व्यतिरेक उपात्तोभयनिमित्त ॥३१॥

स तु वर्षतु वारि वारिदस्त्वमुदाराशय रत्नवर्षणः ।
स कुहूरजनीमलीमसस्त्वमिहान्तर्बहिरेव निर्मल ॥३२॥

अत्रापि स एव पर तु श्लेषोऽत्रानुत्थापको निषिध्यमान साम्य च न शाब्दमिति विशेष ॥३२॥

कतिपयैर्निरणायि जनाधिपस्तदपरैरुदटङ्कि धनाधिपः ।
अजनि केवलमेष गिरा पतिर्भुवि मदेकमते कमतेश्वरः ॥३३॥

अत्र नाय राजा किंतु गिरा पतिरित्याकारापह्नुति । तत्र निषेधभाग परमतत्वोक्त्या पूर्वार्धेन गम्यते । आरोपभागस्तूत्तरार्धेन शाब्द एव ॥३३॥

मकरप्रतिमैर्महाभटैः कविभी रत्ननिभैः समन्वितः ।
कवितामृतकीर्तिचन्द्रयोस्त्वमिहोर्वीरमणासि भाजनम् ॥३४॥

अत्र राज्ञो जलध्युपमाया शब्देनानभिधानेऽप्यङ्गोपमाभिराक्षेपादेकदेशविवर्तिन्युपमा । तेनोत्तरार्धे उपमितसमास एव विशेषणसमासवेद्यस्य तादात्म्यस्य प्रकृतेऽनुपयोगात् ॥३४॥

पुरः पुरस्तादरिभूपतीनां भवन्ति भूवल्लभ भस्मशेषाः ।
अनन्तरं ते भ्रुकुटीविटङ्कात् पतन्ति रोषानलविस्फुलिङ्गाः ॥३५॥

अत्र प्रयोजकातिशयकृतः प्रयोज्यशैघ्र्यातिशयो गम्यते । कार्यकारणयोः पौर्वापर्यविपर्यय-रूपा चेयमतिशयोक्तिः ॥३५॥

भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन् नृप यस्ते भजते तुलास्पदम् ॥३६॥

अत्रोपमानलुप्तोपमेति प्राञ्चः । असमाख्यमलङ्कारान्तरमिति तु वयम् ॥३६॥

पीयूषयूषकल्पामल्पामपि ते गिरं निपीतवताम् ।
तोषाय कल्पते नो योषाधरबिम्बमधुरिमोद्रेकः ॥३७॥

अत्र सम्बन्धेऽप्यसम्बन्ध इत्यतिशयोक्तिभेदः । उपमेयोपमानविशेषणाभ्यामल्पत्वोद्रि-क्तत्वाभ्यामल्पयापि सह भूयानपि मधुरिमा यत्र साम्यं कर्तुमनीशस्तत्र किं वाच्यं भूयस्येति वैलक्षण्यात्मा व्यतिरेकश्च ॥३७॥

भासयति व्योमस्था जगदखिलं कुमुदिनीर्विकासयति ।
कीर्तिस्तव धरणिगता [1]सगरसुतायाससफलतां नयते ॥३८॥
[[1]जगदा० विफलयतितमां भगीरथायासम्]

अत्र व्यज्यमानचन्द्रिकासमुद्ररूपसङ्कीर्ण उल्लेखः ॥३८॥

भाग्येन सह रिपूणामुत्तिष्ठसि विष्टरात् क्रुधाविष्टः ।
सहसैव पतसि तेषु क्षितिशासन मृत्युना साकम् ॥३९॥

'वैरिवधूनाम्' (३०) इत्यत्र कर्मणः सहोक्तिः इह तु कर्तुरिति विशेषः ॥३९॥

त्वयि पाकशासनसमे शासति सकलं वसुन्धरावलयम् ।
विपिने वैरिवधूनां वर्षन्ति विलोचनानि च दिनानि ॥४०॥

अत्र वर्षवदाचरन्तीत्याचारक्विबन्तेन श्लेषात् श्लेषमूलिका तुल्ययोगिता । रिपु-कामिनीवर्णनविषयत्वेन उपमानोपमेययोः द्वयोरपि प्रकृतत्वात् ॥४०॥

अहितापकरणभेषज नरनाथ भवान् करस्थितो यस्य ।
तस्य कुतोऽहिभयं स्यादखिलामपि मेदिनीं धरतः ॥४१॥

अत्र श्लेषनिर्वेदितस्य सर्पभयाभावस्य उपपादकतया उपात्तस्य राजनि भेषजता-दात्म्यारोपस्याप्युपपादकतया स्थिते राजसम्बन्धिनि द्विषदपकरणरूपे धर्मे श्लेषनिर्वेदित सर्पापकरणतादात्म्यमिति प्रथमचरणे श्लिष्टपरम्परितरूपकं तृतीये तु श्लेष एव ॥४१॥

कुवलयलक्ष्मीं हरते तव कीर्तिस्तत्र किं चित्रम् ।
यस्मात् निदानमस्याः लोकनमस्याङ्घ्रिपद्मो हि भवान् ॥४२॥

अत्रोत्पाद्यमानगुणस्योत्पादकोत्पादकभावसमर्थानुगुणः समासव्यासार्थविशेषः । श्लेषश्चास्मिन् गुणः ॥४२॥

दृष्टः सदसि चेदुग्राश्चन्द्रचन्दनचन्द्रिकाः ।
अथ त्वं सङ्गरे सौम्याः शेषकालानलाब्धयः ॥४३॥

अत्र दृष्ट सदसीति वाक्ये त्वमित्यस्यापकर्षणात् अथ त्व सङ्गर इति वाक्ये च दृष्ट इत्यस्यानुवर्तनाद्वाक्ययो पदविनिमयात्मालङ्कार । पूर्वार्द्धे उत्तरार्द्धे च प्रकृतानामेकधर्मसम्बन्धात् तुल्ययोगिता । उपमेयस्य उत्कृष्टगुणत्वसिद्धये उपमानस्य तद्विरुद्धगुणकल्पनात्मकेन अलङ्कारान्तरेण शबलिता ॥४३॥

अपारे खलु संसारे विधिनैकोऽर्जुनः कृतः ।
कीर्त्या निर्मलया भूप त्वया सर्वेऽर्जुनाः कृता ॥४४॥

इह श्लेषमूलो व्यतिरेकः ॥४४॥

दधीचिबलिकर्णेषु हिमहेमाचलाब्धिषु ।
अदातृत्वमधैर्यत्वं दृष्टे भवति भासते ॥४५॥

अत्रापि सैव तथाविधा । यथासख्यसङ्करस्तु विशेष ॥४५॥

शासति त्वयि हे राजन्नखण्डावनिमण्डलम् ।
न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः ॥४६॥

इहापि तुल्ययोगिता मित्रशब्दश्लेषोत्थापिता व्याजस्तुतिश्च ॥४६॥

भानुरग्निर्यमो वायं बलिः कर्णोऽथवा शिविः ।
प्रत्यर्थिनोऽर्थिनश्चेत्यं त्वयि यान्ति विकल्पनाम् ॥४७॥

इह सशय उल्लेखालिङ्गित ॥४७॥

कमलावासकासारः क्षमाधृतिफणीश्वरः ।
भवान् कुवलयस्येन्दुरानन्दयति मानवान् ॥४८॥

इह श्लिष्टपरम्परितरूपक परन्तु मालारूपम् ॥४८॥

गगने चन्द्रिकायन्ते हिमायन्ते हिमाचले ।
पृथिव्या सागरायन्ते भूपाल तव कीर्तयः ॥४९॥

इह मालोपमालिङ्गित उल्लेख. ॥४९॥

मृगतां हरयन् मध्ये वृक्षता च पटीरयन् ।
नक्षत्रतां महोपाना त्वमिन्दवसि भूपते ॥५०॥

इह शुद्धपरम्परिता मालारूपोपमा । आचारक्विबन्ताच्छतरि रूपाणि । तिङि चैकम् ॥५०॥

मध्ये सुधासमुद्रस्य सितामयगृहोदरे ।
पूर्णेन्दुविष्टरे देव स्यातुं योग्यास्तवोषतयः ॥५१॥

अत्र त्रयाणा सुधासमुद्रादीना विशेषणविशेष्यभावेन मधुरिमणि परा काष्ठामधिरूढे वत्वीयोक्तिपदसम्बन्धो युक्तो न तु विशकलित इत्यतिशायिका सद्विशेषणनिबन्धना प्रौढोक्तिः ॥५१॥

अमृतलहरीचन्द्रज्योत्स्नारमावदनाम्बुजा-
न्यधरितवतो निर्मर्यादप्रसादमहाम्बुधेः ।
उदभवदयं देव त्वत्तः कथं परमोल्बणः
प्रलयदहनज्वालाजालाकुलो महसां गणः ॥५२॥

[1] अत्र कारणगुणविरुद्धस्वगुणस्य कार्यस्योत्पत्तेर्विषमालङ्कारः । अमृतलहर्यादीनां त्रयाणामधरीकरणात्मना व्यतिरेकेण सजीवकत्वपरमशीतलत्वविशुद्धत्वसौन्दर्याणामतिशयो गम्यते । एतेषु पद्येषु सम्भवन्तोऽप्यन्येऽलङ्काराः स्फुटत्वान्न विवेचिताः । सहृदयानां प्रीत्यावश्यकं किंचित् व्याख्यातमन्यत्तु तैरेवोल्लासनीयमित्यलं पल्लवितेन ॥५२॥

[[1] जगदा० अत्रामृतलहर्याद्यधरीकरणाभिव्यञ्जकैः संजीवकत्वपरमाह्लादकत्वपरम-सौन्दर्यादिभिरनेकैर्गुणैर्युक्तात् कारणात् तद्विरुद्धगुणकस्य वस्तुकार्योत्पत्तेर्वर्णनाद्विषमः । व्यतिरेकस्तु तत्र गुणः । एवमेतेषु पद्येषु सुधीभिः सम्भवन्तोऽन्येऽपि अलङ्कारा उन्नेयाः । सहृदयप्रीत्या अत्यावश्यकमेव अस्माभिः किंचित् निरूपितम् ॥५२॥ ]

[1] तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयालालितः
श्रीमत्पेरमभट्टसूनुरनिशं विद्वल्ललाटंतपः ।
सन्तुष्टः कमताधिपस्य कवितामाकर्ण्य तद्वर्णनं
श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम् ॥५३॥

[[1] जगदा० तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयालालितः
श्रीमत्पेरमभट्टसूरितनयो विद्वल्ललाटंतपः
श्रीराणाकलिकर्णनन्दनजगत्सिंहप्रभोर्वर्णनं
श्रीमत्पण्डितरायसत्कविजगन्नाथो व्यतानीदिदम् ॥

इति महामहोपाध्यायपदवाक्यप्रमाणपारीणतैलङ्गकुलावतंसश्रीपेरमभट्टसूरेस्तनयेन विनिर्मितं जगदाभरणाख्यं जगत्सिंहवर्णनम् ॥]

# (१३) अवशिष्टान्योक्तयः

## अगस्त्य

गतोऽस्मि तीरं जलधेः पिपासया
स चापि शुष्कश्चुलुकीकृतो मया ।
न लभ्यते बीपलवोऽपि तोयधे
र्ममैव तत् कर्मफलं विजृम्भते ॥१॥

## अगुरु

एणाद्या पशव किरातपरिषत् स्नेहेऽगुणग्राहिणी
सचारोऽत्र न नागरस्य विषयोच्छिन्न मुनीना मन ।
धूमेनातिसुगन्धिनात्र विपिने दिक्चक्रमामोदय
न्नामूलं परिदह्यतेऽगुरुतरु कस्मै किमाचक्ष्महे ॥२॥

## अलि

अपि दलन्मुकुले बकुले यया पदमधायि कदापि न हेलया ।
अहह सा सहसा विधुरे विधौ मधुकरी बदरीमनुवर्तते ॥३॥

अलिरसौ नलिनीकुलवल्लभ
कमलिनीहृदि केलिकृतादर ।
विधिवशात् परदेशमुपागत
कुटजपुष्परस बहु मन्यते ॥४॥

आजन्मकल्पतरुकाननकामचारी
यत् कौतुकादुपगत कुटज मिलिन्द ।
तत् कर्मण सुसदृश फलमेतदेव
यत् प्राप साम्यमधुना मधुमक्षिकाभि ॥५॥

आनम्रा स्तबकभरेण पल्लविन्य
शोभन्ते कति न लता परागपूर्णा ।
आमोदे मधुनि च मार्दवे च तासा
यो भेद स खलु मधुव्रतैकवेद्य ॥६॥

आलिङ्गसे चारुलता लवङ्गी-
माचुम्बसे चाम्बुजिनीं क्रमेण ।
ता चूतवल्लीं मधुप प्रकाम
सताडयस्येव पदं किमेतत् ॥७॥

कति कति न लताः कलिताः संचरता चञ्चरीकरसिकेन ।
नलिनि भवन्मधु मधुरं यत् पीतं तत् तदेव परिपीतम् ॥८॥

करी वरीभरीति चेद् दिशं सरीसरीति कां
स्थिरीचरीकरीति चेन् न चञ्चरीकरीतिकाम् ।
दरीधरीति केतकं वरीवरीति सारसं
जरीजरीति मञ्जरी निरीतिरीतिरीदृशी ॥९॥

किं केतकीपरिमलोत्थितगन्धलुब्धो
गुञ्जन् भ्रमन् भ्रमर वाञ्छसि रन्तुमेताम् ।
तत् कण्टकैः परिवृतामतुलामगम्यां
सन्त्यज्य तां व्रज निकुञ्जलतां सपुष्पाम् ॥१०॥

केतक्यः कटुकण्टकाः कुमुदिनी दोषोदयान् मोदते
जायन्ते विकलाः कलावति पुनः पङ्केरुहां पङ्क्तयः ।
अन्यानि प्रसवानि षट्पदपदन्यासैरवाञ्चि क्वचिद्
भृङ्गो भ्राम्यति कल्पवृक्ष विपदामन्तं भवन्तं विना ॥११॥

क्वचित् क्वचिदयं यातु रन्तुं प्रेमवशंवदः ।
न विस्मरति राजीवं षट्पदं मलिनं हृदि ॥१२॥

गन्धाढ्यासौ जगति विदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या रसिकमधुपः पुष्पमध्ये पपात ।
अन्धीभूतः कुसुमरजसा कण्टकैर्भिन्नपक्षः
स्थातुं गन्तुं क्षणमपि सखे नैव शक्तो द्विरेफः ॥१३॥

गलितानि मधूनि सर्वत.
प्रविकीर्णानि दलानि मारुतैः ।
अधुनापि न हन्त माधवीं
मधुपैतामिह मावलम्बसे ॥१४॥

दृष्ट्वा हृष्टोऽभवदलिरसौ चित्रसंस्थे च पद्मे
वर्णं रूपं विमिति विमिति व्याहरन्नाजगाम ।
नास्मिन् गन्धो न च मधुकणो नास्ति तत् सौकुमार्यम्
पूर्णंन् पूर्णंप्रवनतमुखो व्रीडया निर्जगाम ॥१५॥

नन्दनजन्मा मधुपः सुरतरुकुसुमेषु पीतमकरन्दः ।
दैवादवनिमुपेतः कुटजकुसुमेष्वपि समीहते वृत्तिम् ॥१६॥

नष्टे वारिजविपिने कष्टे नष्टेऽपि मालतीनिकरे ।
हन्त किं जीवति लोके मूलकमकरन्दबिन्दुना मधुपः ॥१७॥

निषीदतु शिरीषके चरतु वा कदम्बे चिर
समुत्पततु पङ्कजे कुरवके करोतु स्थितिम् ।
दिन नयतु कुन्दके ननु रसाल कालक्रमान
न विस्मरति केवल तव गुणानसौ षट्पद ॥१८॥

नि शङ्क गजपतिगण्डदानधारा-
माराध्यन् भ्रमर दिनान्यमून्यनैषी ।
यावत् तु स्फुरति करालकर्णताल-
स्तावत् त्व नवनलिनीवनीमुपेया ॥१९॥

नीत जन्म नवीननीरजवने पीत मधु स्वेच्छया
मालत्या कुसुमेषु येन सतत केली कृता हेलया ।
तेनेय मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते
हा धिग् दैवकृत स एव मधुप का का दशा नागत ॥२०॥

पवनापनीतसौरभपूरोदकपूरपद्मिनीलुब्ध ।
अपरीक्षितस्वपक्षो गन्ता हन्तापद मधुप ॥२१॥

पीत पङ्कजकानने मधु मया नीपेऽपनीत वयो
बन्धूके वरबन्धुता विरचिता रक्त रसालद्रुमे ।
किञ्चाकारि कुमुद्वतीपरिकरे क्रीडाकलाकौशल
कस्तद् वेत्तु विधीयतेऽद्य बदरीवृन्दस्य यद बन्दनम् ॥२२॥

पुरन्दरपुरे पुरा रुचिरकानने नन्दने
निपीय मधुर मधु प्रकटितारवो योऽभवत ।
प्रशुष्कगलतालुको गलितमञ्जुलालापक
स एव मधुपोऽधुना बदरिकारस काङ्क्षति ॥२३॥

पूर्वं कल्पतरुप्रसूनमदिरास्वादेन मेदस्विनी
दीव्यद्दिव्यतरङ्गिणीकमलिनीप्रेङ्खोलिकाखेलिनी ।
दैवादद्य महीतले मधुकरी निष्पावपुष्पेच्छया
भ्राम्यन्ती कृकलासवक्त्रकुहर हा हन्त सगाहते ॥२४॥

प्रबन्धन पद्मवने निशाया
मातङ्गदाने मदकर्णताल ।
स्वप्राणभङ्ग खलु चम्पकेऽस्मिन्
सर्वत्र दु ख भ्रमरस्य लोके ॥२५॥

फलाना च दलाना च सन्तु ते ते विवेचका ।
मकरन्दविशेषज्ञो मिलिन्दमपहाय क ॥२६॥

बन्धनान्यपि हि सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणो हि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजबद्धः ॥२७॥

भृङ्गपुङ्गव मरन्दनिर्झरीतश्च पद्ममपहाय साम्प्रतम् ।
जाल्म शाल्मलिमुपैषि किं वृथा शोकमात्मलयितुं समीहसे ॥२८॥

भृङ्गः क्षुधालुरपि किंशुकविभ्रमेण
व्याजृम्भमाणशुकचञ्चुपुटं प्रविष्टः ।
आशां विहाय मधुनोऽवयवैः समग्रै-
र्निर्गन्तुमिच्छति परं परितप्यमानः ॥२९॥

भ्रम भ्रमर यूथासु मालतीषु चिरं मिल ।
मा पुनश्चम्पकारण्ये स्नेहपूर्णं मनः कृथाः ॥३०।

भ्रमर मरणभीतिं मुञ्च चाम्पेयपुष्पे
विहर हर तदीयं सौरभं सौहृदेन ।
मधुकर सुकरं चेद् वस्तु हस्तेन लब्धुं
भवतु तदुपभोगेऽनिष्टमिष्टं फलं वा ॥३१॥

मधुपे मालतीपुष्पं सतृष्णं यानुमुद्यते ।
हन्त दैवादुपागम्योपात्तमारण्यकेन तत् ॥३२॥

मन्दारमेदुरमरन्दरमालमाङ्गः
स्वर्नागरीनयननन्दन एष भृङ्गः ।
दैवादुपेत्य जगतीमगतिर्विषीदन्
घाटोटकोटरकुटीषु निलीय शेते ॥३३॥

माकन्दे मधुपानमम्बुजकुले क्रीडा कदम्बद्रुमे
दोलाखेलनकौतुकं कुवलये कः को नवो विभ्रमः ।
येनाकारि मधुव्रतेन सहसा सोऽयं मधूके मधौ
माध्वीक परिपीय पीवरतनुर्जीवत्यहो जीवनम् ॥३४॥

यदपि भेदगणेन निषेवितं प्रकटकण्टककोटिसमन्वितम् ।
तदपि पङ्कजमेति मधुव्रतः सुरससौरभसुन्दरताश्रयम् ॥३५॥

यस्मीरं न गतः श्रमेषु मल्लीचम्पकपुञ्जकुलेषु ।
तस्याकेलिर्हि निम्बे यातः कथय कथं न भवत्युपरागः ॥३६॥

यावदेनं न जानाति पारिजातं मधुव्रतः ।
तावद् भ्रमणमेवास्य कुञ्जे कुञ्जे द्रुमे द्रुमे ॥३७॥

लतास्तास्तास्तादृङ्मधुरसवती पङ्कजवनी
समालिङ्गच्चुम्बन्स्वयमगमयद भूरिसमयम् ।
इदानीं चेन् नीचे विचरति शुचेरेष लकुचे
कुचेष्टेयं धातुर्भवति न हि वाच्यो मधुकर ॥३८॥

विकचसहकारवाटीपरिमलकेलीपरायणो मधुप ।
अधुना हृदय नियतिवशादर्कवने शलभसङ्कुले चरति ॥३९॥

सदम्भोजाम्भोज परिपजति सम्भोगरहितो
गतो मन्दे कुन्दे वहति मकरन्दे न हि मन ।
ततो मन्येऽरण्ये क्वचिदधिकपुण्येऽपि ललिता
लवङ्गीमासङ्गी भजति नवभृङ्गीपरिवृढ ॥४०॥

सानन्दमेव मकरन्दमिहारविन्दे
विन्देत षट्पदयुवेति जनैरटङ्कि ।
दैवादकाण्डपरिमुद्रितपुण्डरीक-
कोशादभूदहह नि सरण पुमर्थं ॥४१॥

हुताशज्वालाभे स्थितवति रवावद्रिशिखरे
पिपासुर्माध्वीक प्रविशति सरोज मधुकर ।
तदन्त सरोध न गणयति सन्ध्यासमयज
न चार्तं स्वापाय विमृशति फलैकान्तरसिक ॥४२॥

अश्व

आजानेय चरित्र भवदीय श्लाघनीयमत्यर्थम ।
तव हि चतुष्पादोऽन्ये गतिमनुसर्तुं न शक्नुवन्ति यत ॥४३॥

यावन् न मुञ्चसि तुरङ्गम दुष्टकर्म
तावन् मुहुर्भवसि नेतृजनेन दण्ड्य ।
त्यक्तखेदृशीं यदि गतिं सरलोऽभविष्य
सन्तो भवन्तमपि सम्यगमानयिष्यन् ॥४४॥

अश्वत्थ

अस्ति स्वादु फल किमत्तुमथवा घ्रातु पुन कोरक
तद् विश्राम्यतु नाम भोक्तुममल पत्र किमस्त्यन्तत ।
सेव्यो हन्त यदीदृशोऽपि मनुजैर्वृक्षाधम पिप्पलो
दु स्वातन्त्र्यमिद विधे कथय तत् कस्याग्रतो रुद्यताम् ॥४५॥

यन्मूले भगवान् पुरारिरमलो यत्पर्णशायी हरि-
स्तस्येहाततशाखिनो वटतरोर्नामापि न श्रूयते ।
यच्छाखानिचयः पिशाचनिलयो यन्मूलगाः पन्नगा-
स्तस्याश्वत्थतरोरहो कति नमस्काराः कति प्रार्थनाः ॥४६॥

आदिवराहो राहुश्च

इयत्येतस्मिन् वा निरवधिचमत्कृत्यतिशये
वराहो वा राहुः प्रभवति चमत्कारविषयः ।
महीमेको मग्नां यदयमवहद् दन्तमुसलैः
शिरःशेषः शत्रुं निगिरति पुनः सन्त्यजति च ॥४७॥

आदिशेषः

बहवः फणिनः सन्ति भेकभक्षणतत्पराः ।
एक एव हि शेषोऽयं भूभारवहनक्षमः ॥४८॥

आरकूटः

अयि डम्बरमारकूट धत्से
कनकस्यापि यदन्ततो निकामम् ।
निकषा निकषं हि तत् तदा चे-
दनुमन्ये सुदृशामलंक्रियात्वम् ॥४९॥

इक्षुः

कान्तोऽसि नित्यमधुरोऽसि रसाकुलोऽसि
किं चासि पञ्चशरकार्मुकमद्वितीयम् ।
इक्षो तवास्ति सकलं परमेकमूनं
यत् सेवितो भजसि नीरसतां क्रमेण ॥५०॥

उत्तमः

सुजनोऽपि हि कुप्यति भृशमनवसरज्ञेन याचितः सुहृदा ।
सुरतान्तरे रुदन्तं प्रियमपि पुत्रं शपत्यहो जननी ॥५१॥

उष्ट्रः

दासेरको रसत्येव युक्तं भारेऽधिरोहति ।
उत्तार्यमाणोऽपि पुनर्यत् तत्र किमु कुर्महे ॥५२॥

कञ्चुक

श्रीमता कथय कञ्चुक पूर्वं कानि कानि सुकृतानि कृतानि ।
जन्म यापयसि येन समस्त हारहृद्यहृदये हरिणाक्ष्या ॥५३॥

कदली

काले तरोरनुपकारि फल फलित्वा
लज्जावशादुचित एव विनाशयोग ।
एतत् तु चित्रमुपकृत्य फलं परेभ्य
प्राणान् निजान् झटिति यत कदली जहाति ॥५४॥

किं केतकी फलति किं पनसस्तु पुष्प
किं नागवल्लिरिह पुष्पफले प्रसूते ।
कस्यापि कोऽप्यतिशयोऽस्ति स तेन सदभि
सम्पूज्यते कदलि यासि तत प्रसिद्धिम् ॥५५॥

कपि

वृक्षान्दोलनमद्य ते क्व नु गत नर्म स्वयूथस्य वा
यूकान्वेषणरोपसौख्यबहुलाश्चेष्टा मुखोत्था क्व ता ।
क्वारण्ये फणिपूर्णगल्लकुहरस्यान्येषु ता भीषिका
भीत सम्प्रति कौशिकाद गलवलदव्याल कपे नृत्यसि ॥५६॥

वानराणा विवाहेषु तत्र गार्दभगायका ।
परस्पर प्रशसन्ति अहो रूपमहो ध्वनि ॥५७॥

कपिञ्जल

मोघ भ्रमेण हि कपिञ्जल पोषण ते
दत्त पर प्रलपिनु यदि तु त्वदीयम ।
स्थान त्यजस्यय न किञ्चन कर्तुमर्हो
न प्रत्ययस्त्वयि पलायनमेव युद्धे ॥५८॥

कमलादि

अपि त्वया कैरविणि व्यधायि
मुधा सुधाबन्धुसुबन्धुभाव ।
जनापवाद परित प्रयात
समागमो हन्त न जातु जात ॥५९॥

अयि मकरन्दस्यन्दिनि पद्मिनि मन्ये तवैव सुभगत्वम् ।
पुष्पवतीमपि भवतीं त्यजति न वृद्धः शुचिर्हंसः ॥६०॥

एतावत् सरसिजकुड्मलस्य कृत्यं
भित्त्वाम्भः सरसि विनिर्गमो बहिर्यत् ।
आमोदो विकसनमिन्दिरानिवास-
स्तत् सर्वं दिनकरकृत्यमामनन्ति ॥६१॥

किं कुप्यसि कस्मै वा सौरभसाराय कुप्य निजमधुने ।
यस्य कृते शतपत्र प्रतिपत्रं तेऽद्य मृग्यते भ्रमरैः ॥६२॥

किं बान्धवेन रविणा हरिणापि किं वा
लक्ष्म्यापि किं सरसिजोदरजन्मना वा ।
एकस्य शुद्धचरितस्य सरोरुहस्य
नैषा तुषारजनिता शमिता विपत्तिः ॥६३॥

खद्योतास्तरला भवन्ति भगवानस्तंगतो भानुमान्
कोकः शोकमुपैति मत्तमनसः क्रेङ्कुर्वते कौशिकाः ।
इत्थं चेत् सदसद्विवेकविधुरो धाता तदेतादृशं
न द्रष्टव्यमितीव मुद्रितवती पद्मेक्षणं पद्मिनी ॥६४॥

जनिः सरोऽङ्कादतिपङ्किनो यद्
यल्लोलुपैर्वा मधुपैर्विहारः ।
कलङ्क एवैष कुमुद्वतीनां
कलङ्किनः किं तु कलावतो न ॥६५॥

दलानि मुकुलीकृत्य प्रवेशं न ददासि चेत् ।
पद्म भृङ्गस्य का हानिः फुल्ले चूतवने स्थिते ॥६६॥

पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि न हि किं ते ।
हर हर विस्मृत्योक्तं क्व नु लज्जा सवितृरक्तायाः ॥६७॥

मालतीमुकुला याताः कुन्दा मन्दायितास्तथा ।
पङ्कज त्वामिदं ब्रूमः कुत्र यातु मधुव्रतः ॥६८॥

लक्ष्मीसम्पर्कजातोऽयं दोषः पद्मस्य निश्चितः ।
यदेष गुणसन्दोहधाम्नि चन्द्रे पराङ्मुखः ॥६९॥

लक्ष्मीः स्वयं निवसति त्वयि लोकधात्रा
मित्रेण चापि विदितोऽस्ति दृढोऽनुरागः ।
वन्दीव गायति गुणांस्तव चञ्चरीकः
कः पुण्डरीक तव साम्यमुरीकरोति ॥७०॥

लक्ष्म्या निवास इति वारिरुहा प्रसिद्धि-
रन्वेषिता कतिपया विरलास्तु सन्ति ।
राज्ञि प्रसारितकरे किमहं ददामि
सङ्कोचितं वदनमम्बुरुहैरितीव ॥७१॥

सम्भूतिस्तव मानसे सरसिज त्वत्सौरभैर्वासिता
सर्वास्ता ककुभस्तवास्ति परमो बन्धुर्विवस्वानपि ।
त्वं चेदद्य गुणानवद्य शिशिरे शीतानिलैः शीयसे
प्रायः प्राय इद तदत्र परमं दृष्टाददृष्टं फलम् ॥७२॥

हे मल्लि हे मालति हे लवङ्गि
न तादृशी क्वापि भवादृशीनाम् ।
क्षणं समाधाय मधुव्रतं या
विस्मारयेदम्बुजिनीवियोगम् ॥७३॥

हंसा सर्वाङ्गधवला पद्मेभ्यो बहिरासते ।
अन्तर्विशन्ति मधुपा श्रीमतामीदृशी गतिः ॥७४॥

कर्णधारः

जीर्णा तरिः सरिदियं च गभीरनीरा
नक्राकुला वहति वायुरतिप्रचण्डः ।
तार्याः स्त्रियश्च शिशवश्च तथैव वृद्धा
तत् कर्णधारभुजयोर्बलमाश्रयामः ॥७५॥

कलमाः

अस्मानवेहि कलमानलमाहताना
येषां प्रचण्डमुसलैरवदाततैव ।
स्नेहं विमुच्य सहसा खलता प्रयान्ति
ये स्वल्पपीडनवशान् न वयं तिलास्ते ॥७६॥

कलशः

भ्रातः काञ्चनलेपगोपितबहिस्ताम्राकृते सर्वतो
मा भैषीः कलश स्थिरो भव चिरं देवालयस्योपरि ।
ताम्रत्वं गतमेव काञ्चनमयी कीर्तिः स्थिरा तेऽधुना
नान्तस्तत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः ॥७७॥

कल्पद्रुमः

जन्माभूदुदधौ विधौ सहजता वृन्दारकैर्वन्द्यता
तत्तत्कामफलाय शक्तिरतुला यस्यास्ति वश्यानिशम् ।

विश्रामाय चिराय कल्पलतिका भूयो यमालम्बते
कस्त्वां स्तोतुमपि क्षमोऽस्ति तदपि त्वं जल्प कल्पद्रुम ॥७८॥

न द्वारि द्विरदावली न परितो वानायुजश्रेणयः
किं वा शौक्तिकमौक्तिकैर्मृगदृशां तारा न हारावलिः ।
हे कल्पद्रुम दूरतोऽस्तु भवतः सेवाभवं वैभवं
तुष्यामि त्वयि तावतापि यदि न स्मेरा भवन्ति द्विषः ॥७९॥

न मया रचितं तवालवालं
पयसा वा विहितस्तवाभिषेकः ।
अयि कल्पतरो परोपकारे
भवतो विश्वविलक्षणः प्रकारः ॥८०॥

कलविङ्कः

गिलितगरलकण्ठः शङ्करो नीलकण्ठः
प्रबलतरविषाशी बर्हिणो नीलकण्ठः ।
अजिरतृणविसर्पत्कीटदर्पापहारिन्
कलयसि कलविङ्क त्वं च भो नीलकण्ठः ॥८१॥

कविः

कस्त्वं भोः कविरस्मि तत् किमु सखे क्षीणोऽस्यनाहारतो
धिग् देशं गुणिनोऽपि दुर्गतिरियं देशं न मामेव धिक् ।
पाकार्थी क्षुधितो यदैव विदधे पाकाय बुद्धिं तदा
विन्ध्ये नेन्धनमम्बुधौ न सलिलं नान्नं धरित्रीतले ॥८२॥

कस्तूरिका

दुर्लोलपल्लीपतिपुत्रहस्ते
कस्तूरि कस्ते वद दुर्विपाकः ।
आरभ्यसौरभ्यकथासु मौनं
मालिन्यमात्रे वचसोऽवकाशः ॥८३॥

मृगमद मा कुरु गर्वं परिमलमात्रेण तं त्वमुपयासि ।
परिमलशीतलतानिर्मलताः सुकुमारता च कर्पूरे ॥८४॥

यद्यपि दैवाल्लब्धा कस्तूरीभूमिरत्रभूरितरम् ।
नेया किमसौ तदपि हि शौचार्थं जानता पुंसा ॥८५॥

काकः

करोतु करटः शब्दं सर्वदा प्राङ्गणे वसन् ।
न शृणोति बुधः प्रीत्या शृणोति पिकभाषितम् ॥८६॥

काकस्य चञ्चुर्यदि हेमयुक्ता
माणिक्ययुक्तौ चरणौ च तस्य ।
एकैकपक्षे गजराजमुक्ता-
स्तथापि काको न स राजहंस ॥८७॥

काका प्रभुप्रणिहिता पिकपङ्क्तिवृन्दै-
र्माकन्दवृन्दमकरन्दरसान् पिबन्तु ।
प्राप्ते वसन्तसमये कथमाचरन्ति
कर्णामृतानि कलपञ्चमकूजितानि ॥८८॥

काम सुधाकरकरामृतदिव्यरूप-
सौधाग्रपीठवसति सुखमस्तु काक ।
श्रीसुन्दरीरमणसङ्गमकण्ठलग्न-
पूर्यत्सुधामणितजित् किमसौ कपोत ॥८९॥

तत् काक त्वयि युक्ता कटुवाग्वैवर्ण्यधूर्ततांशुचिता ।
यदि विष्ठाकृमिपुष्टे तत्र सदोषा हि तच्चित्रम ॥९०॥

त्रोटीपुट करट कुड्मलयाय तात
यावत् प्रतिव्रजति नाकमय मराल ।
नो चेदमङ्गलकठोररवा विहङ्गा
सर्वे भुवीति निजसंसदि शसिता न ॥९१॥

बन्ध लब्धवत परस्य वदन भिक्षाशया पश्यत
स्वावासच्युतिवेदना विदधत कान्ता विना सीदत ।
भ्राम्यन्त सहभार्यया प्रतिदिश प्रत्यापग प्रत्यग
कीरस्याध्ययन हसन्ति विविधक्रीडलसा वायसा ॥९२॥

वय काका वय काका किं रुदन्तीति वायसा ।
तिमिरारिस्तमो हन्ति शङ्कयातङ्कमानसा ॥९३॥

काच

अज्ञतया प्रेम्णा वा चूडामणिमाकलय्य काचमणिम् ।
नृपतिर्वहेत शिरसा तेनासौ नह्यनर्घमणि ॥९४॥

कार्पास

नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे ।
यषा गुणमय जन्म सर्वेषा गुह्यगुप्तये ॥९५॥

कायस्थः

विप्रेभ्यः साधुदानं रिपुजनसुहृदां चोपकारान् कुरु त्वं
सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्यं यथार्थम् ।
श्रोत्रे ते तथ्यमेतत् कथयति सततं लेखिनी भाग्यशालिन्
नो चेन् नष्टेऽधिकारे मम मुखसदृशं तावकास्यं भवेद्धि ॥९६॥

कार्यान्तं गतः

नौकां वै भजते तावद् यावत् पारं न गच्छति ।
उत्तीर्णे तु नदीपारे नौकया किं प्रयोजनम् ॥९७॥

कीरः

अपारः पाथोधिः पुलिनपदवी योजनशतं
निरालम्बो मार्गो वियति बत शून्या दश दिशः ।
इतीवायं कीरः कतिचन पदान्येव गगने
मुहुर्भ्राम्यन् भ्राम्यन् पतति गुणवृक्षे निपतति ॥९८॥

अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः
स्फुटं नृत्यद्भृङ्गीविविधनवसंगीतकलनात् ।
परानन्दैः पूर्णो क इव तव वर्णावलिपद-
क्रमश्रोता वेत्ता द्विजवर शुक भ्राम्यसि कुतः ॥९९॥

अये कीरश्रेणीपरिवृढ वृथा वासरशतं
किमर्थं त्वं व्यर्थं क्षपयसि पलाशे रभसतः ।
यदा पुष्पारम्भे मुखमलिनिमा किंशुकतरो-
स्तदैवेदं ज्ञातं फलपरिचयो दुर्लभतरः ॥१००॥

उच्चैरेष तरुः फलं च पृथुलं दृष्ट्वा प्रहृष्टः शुकः
शालि चास्यगतं विहाय निभृतं तन् नारिकेलं गतः ।
तत्रारुह्य बुभुक्षितेन मनसा यत्नः कृतो भेदने-
प्याशा तस्य न केवलं विगलिता चञ्चुश्च चूर्णीकृता ॥१०१॥

कीर नीरसकरीरपादपे किं स्थितोऽसि कथयामि धीरतः ।
मामकीनसहकारपादपा दुःसमीरलहरीभिराहताः ॥१०२॥

दृष्ट्वा शाखावकीर्णं फलभरनमितं भूमिभागावनद्धं
त्यक्त्वा शालिप्रकाण्डं पनसमुपगतश्चिन्तयित्वेति कीरः ।
हत्वा चञ्चुं प्रहर्षाद् विगलितपयसा सम्भृताशेषपक्षो
भिन्नश्चोड्डीय गन्तुं गगनपरिचिता या गतिः सापि नष्टा ॥१०३॥

द्राक्षा प्रदेहि मधु वा वदने निधेहि
देहे विधेहि किमु वा करलालनानि ।
जातिस्वभावचपल पुनरेष कीर-
स्तत्रैव यास्यति कृशोदरि मुक्तबन्ध ॥१०४॥

द्विजकुलपते मेधासिन्धो सुभाषितकोविद
त्वयि गृहमुपायाते जात बहूपकृत मम ।
यदिह नियत बाला वृद्धा स्त्रिय परिचारिका
शुक भगवतो नाम प्रीता गृणन्ति मुहुर्मुहु ॥१०५॥

अतिपरुषरवाणा वायसाना निवासे
फलवति पिचुमन्दे मन्दबुद्धे कथ वा ।
स्वनसि मधुरवाणीं व्यर्थयन् राजकीर
कुसुमितसहकारप्रान्तभाग विहाय ॥१०६॥

वास काञ्चनपञ्जरे नृपकराम्भोजैस्तनोर्मार्जन
भक्ष्य साधु रसालदाडिमफल पेय सुधाभ पय ।
पाठ ससदि रामनाम सतत धीरस्य कीरस्य मे
हा हा हन्त तथापि जन्मविटपिक्रोडे मनो धावति ॥१०७॥

शुक तव पठन व्यसन न गुण स गुणाभास ।
समजनि येनामरण शरण पञ्जरवास ॥१०८॥

सुखयति कीरकिशोरवाक्प्रचार
सुजनमनासि नवामृतप्रसार ।
मृदुलशकुन्तनिपीडनोग्रभाल
मदयत किं कलुषान्तर बिडालम् ॥१०९॥

सुभाषित्व सुरूपत्व वाचालत्व सुशीलता ।
एतत् कीरकिशोरस्य व्यर्थमाखुभुज पुर ॥ ॥११०॥

सुभाषितस्याध्ययनेऽनुषक्त
शुक वराका प्रहसन्ति काका ।
तमेव ससत्सु गिर गिरन्त
दृष्ट्वा भवन्ति त्रपया नतास्या ॥१११॥

हे कीर कैरवसुगौरिति सकलय्य
मा मात्र सरससि सज्जनरञ्जनाय ।
बालोऽपि यत्र कलकण्ठमुकण्ठपीठ
सलेढि कोमलकुहू कृतपूर्णकण्ठ ॥११२॥

### कुस्तुम्भरी

कुस्तुम्भरी समायाति तिन्तिण्या मन्त्रिणा सह ।
पलायध्वं पलायध्वं रे रे शाकविडम्बकाः ॥११३॥

### कूपः

अमुना मरुकूपेन के के नात्र न वञ्चिताः ।
रुदत्पथिकनेत्राम्बुपिच्छिलप्रान्तभूमिना ॥११४॥

यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य ।
जयति तथापि विवेकः सदानपात्रानुमानेन ॥११५॥

रे कूप जीवनागार यदि दातृत्वमिच्छसि ।
तदा त्वं गुणवत् पात्रमेकं वा सन्निधौ कुरु ॥११६॥

हे कूप त्वं चिरं जीव स्वल्पतोयो बहुव्ययः ।
गुणवद्रिक्तपात्राणि प्राप्नुवन्ति हि पूर्णताम् ॥११७॥

### कूर्मः

पुत्रिण्यः कति नात्र सन्ति भुवनेऽभूवन् कियत्योऽथवा
सौभाग्यैकमठी तथाद्यिकमठी स्त्रीषु प्रशंसास्पदम् ।
भग्ने भोगिनि भङ्गुरेषु करिषु भ्रष्टोत्तवे दंष्ट्रिणि
क्षोणीं साहसिकाग्रणीस्तुलयितुं जर्गात यस्याः सुतः ॥११८॥

भ्रमति गिरिराट् पृष्ठे गर्जत्युपर्यपि सागरो
दहति विततज्वालाजालो जगन्ति विषानलः ।
स तु विनिहितग्रीवाकाण्डः कटाहकुटोदरे
स्वपिति भगवान् कूर्मो निद्राभरालसलोचनः ॥११९॥

### कृष्णसारः

अयि कुरङ्गि तुरङ्गमविक्रमे
त्यज वनं जवनं गमनं कुरु ।
इह वने विचरन्ति हि नायकाः
सुरभिलोहितलोहितसायकाः ॥१२०॥

अयि कुरङ्गि तपोवनविभ्रमात्
किमु गतासि किरातपुरीमिमाम् ।
इह न पश्यसि दारय मारय
ग्रस पिबेति शुकानपि जल्पतः ॥१२१॥

तृणमुखमपि न खलु त्वा त्यजन्ति हे हरिण वैरिण शबरा ।
यशसेव जीवितमिद त्यज योजितशृङ्गसङ्ग्राम ॥१२२॥

नात्र व्याधनरा पतन्ति परितो नैवात्र दावानलो
नैवोच्चावचभीतिरत्र चपला नवास्तृता वागुरा ।
इत्यालोच्य कुरङ्गकेण विहितो नक्षत्रनाथाश्रय
को जानाति विर्जिविजास्यति पुन स्वर्भानुदन्तव्रणम ॥१२३॥

पाशक्षुण्णखुरस्य बाणपतनप्रव्यक्तरक्तच्छटा-
च्छन्नाङ्गस्य दवाग्निदाहविक्लस्यासेद्रुयोऽप्याश्रमम ।
धिग् दैव विषमा मृगस्य दिवसा सर्वानुकम्पामयो
मा भैषीरिति भाषणेऽपि यदभूद वाचयमोऽय मुनि ॥१२४॥

भुक्त्वा भव्यतृणानि नव्यसलिलान्यापीय वापीतलान
निश्शङ्क परिशील्य शीतलतरून रोमन्थमभ्यस्यति ।
या सैवाद्य मृगी मृगादनमुखप्राप्त शिशु शोचते
तद्वेधा बहुधा विपद्विरचने बीजानि नापेक्षते ॥१२५॥

विद्धा मृगी व्याधशिलीमुखेन
मृगस्तु तत्कातरवीक्षितेन ।
विहाय देह विगतव्यथैका
परस्य जीवावधिराधिरासीत ॥१२६॥

वृकस्ते मायावी चरति निकटे खञ्जवदय
त्वमेन विस्रम्भादनुसरसि मूढो यदि मृग ।
शयान त्वा गूढ ववचन समज नेष्यति निज
स उत्तिष्ठन कुक्षि सपदि कणशस्ते दलयति ॥१२७॥

सौरभ्येण त्रिभुवनमनोहारिणा काननेऽस्मिन
सत्कस्तूरीहरिण भवता वासितो दिग्विभाग ।
तस्यैतत् ते फलमुपगत पत्रिभिर्लुब्धकाना
विद्ध प्राणास्त्यजसि न गुण श्रेयसे निर्गुणेषु ॥१२८॥

केतकी

एकेन चेत परिहृतोऽसि महेश्वरेण
किं तेन केतक विषादमुरीकरोषि ।
अन्ये न किं जगति सन्ति महागुणज्ञा
ये त्वा वहन्ति शिरसा नरदेवदेवा ॥१२९॥

कालक्रमक्रमनीयक्रोडेय केतकीति का शङ्का ।
वर्द्धियथा यथा स्यात् तथा तथा कण्टकोत्कर्ष ॥१३०॥

हे हेमकेतकि कथं बहुगर्विताऽसि
संसेव्यसे मधुकरैरखिलैरितीव ।
नैषा रसातिशयता नलिनीवियोगात्
संदीयते विकटकण्टकशूलझम्पः ॥१३१॥

कोकिलः

अथ कोकिल कुरु मौनं जलधरसमयेऽपि पिच्छिला भूमिः ।
विकसति कुटजकदम्बे वक्तरि भेके कुतस्तवावसरः ॥१३२॥

अम्भोजप्रकरोऽथ केतककुलं कुन्दोत्करः कैरव-
व्रातो मल्लिगणोऽथ चम्पकचयो जातीसमूहोऽथवा ।
नो चेदादरमातनोति पिक ते खेदं वृथा मा कृथा
यस्मात् क्वापि कदापि कोऽपि भविता यस्त्वद्गुणान् ज्ञास्यति ॥१३३॥

अयि कोकिलपाक काकनीडे वस यावद् भवतो भवन्ति पक्षाः ।
बहवस्तदनन्तरं निवासाः परिपश्यन्ति रसाधिका रसालाः ॥१३४॥

अहंयुवरवर्णिनीजनमदापनोदव्रत-
स्फुरच्चतुरपञ्चमस्वरजितान्यपक्षिव्रजः ।
रसालतरुणा कृतामसमकुल्यतामात्मनो
विहन्तुमिह कोकिलः फलिनमन्यमुद्वीक्षते ॥१३५॥

अहोरात्रं कूजंस्त्वमिति गतशोषं किमप्रसे
तव भ्रातः प्राप्यं परभृतक किंचित् किसलयम् ।
परीक्षापूर्वं किं वितरति रसालः फलमयं
पिकः काकः पान्थः कपिरपि च सर्वेऽपि सदृशाः ॥१३६॥

आकलिकोदयमाशापाशादाश्रित्य कोकिलश्चूतम् ।
पाकप्रवणे तस्मिन् काकैः परितः कथं जीवेत् ॥१३७॥

आसाद्याम्रवनीमिमां प्रतिनवामास्वाद्य तन्मञ्जरी-
मेवं पञ्चममञ्च नन्दनवनभ्रान्त्या तया कोकिल ।
एषा वायसमण्डली घनशिरःशूलाहतिव्याकुला
कुध्वानैर्बधिरीकरिष्यति वृथा श्रोत्राणि सत्पत्रिणाम् ॥१३८॥

कलकण्ठ यथा शोभा सहकारे भवद्गिरः ।
खदिरे वा पलाशे वा किं तथा स्याद् विचारय ॥१३९॥

काका वृका घूकबकाश्च भेकाः
प्रणम्य युष्मानिदमेव याचे ।
कोलाहलं मा कुरुत क्षमध्वं
पुंस्कोकिलः कूजति मञ्जुरावम् ॥१४०॥

किं कोमलं पिकरवं पिक तिष्ठ तूष्णी-
मेते तु पामरनरा स्वरमाकलय्य ।
को वारयेत्ययमये निकटे कटूनि
रे वध्यतामिति वदन्ति गृहीतदण्डा ॥१४१॥

तत्किं स्मरसि न भुक्त यत् पिक रे काकमन्दिरे पूर्वम ।
सहकारकुसुमकाले हठन कुरुषेऽधुना रावम ॥१४२॥

तावच् चकोरचरणायुधचक्रवाक-
पारावतादिविहगा कलमालपन्तु ।
यावद वसन्तरजनीघटिकावसान-
मासाद्य कोकिलयुवा न कुहू करोति ॥१४३॥

तावन् मौनेन नीयन्ते कोकिलैश्चैव वासरा ।
यावत् सर्वजनानन्ददायिनी वाक प्रवर्तते ॥१४४॥

ध्यायन्नञ्जनतोयबुद्बुदकणप्राय स्वक मस्तक
पश्यन्नायसकूटकोटिघटितत्राटीपुट वायसम ।
न स्थातु न पलायितु न चलितु नोन्मीलितु मीलितु
नो मतुं न च जीवितु प्रभवति त्रासाकुल कोकिल ॥१४५॥

भद्र भद्र कृत मौन कोकिलजलदागमे ।
दर्दुरा यत्र वक्तारस्तत्र मौन हि शोभनम् ॥१४६॥

मलिनात्मना विराग प्रकटीकृत एव कोकिलखलेन ।
जीवनदानामुन्नतिसमये वायसमोभवता ॥१४७॥

येनोषित रुचिरपल्लवमञ्जरीषु
श्रीखण्डमण्डलरसालवने सदैव ।
दैवात् स कोकिलयुवा निपपात निम्बे
तत्रापि दुष्टवलिपुष्टकुलैर्विवाद ॥१४८॥

रसाल तव माधुरीप्रथितसत्फल पक्षिण-
श्चरन्ति नहि ते यश प्रकटयन्ति काष्ठासु ते ।
पिकस्तु नवपल्लवप्रसनमेव कुर्वन् स्वरै
प्रकाशयति दिक्षु ते मृदुलपञ्चमाख्यैर्यश ॥१४९॥

रे रे कोकिल मा भज मौन किञ्चिदुदञ्चय पञ्चमरागम् ।
नो चेत् त्वामिह को जानीते काककदम्बकपिहिते चूते ॥१५०॥

वपुर्मलिनमीदृशं तदपि पुष्टमेतत् परैः
शकुन्त बत सन्ततं शकुनिभिर्वने धावसि ।
क्व वा वद गरुत्मता मधुरमीदृशं शिक्षितं
निषिञ्चसि सुधां यतः श्रवणयोरिमं शृण्वतः ॥१५१॥

विपिने घोरतरेऽस्मिन् मा कुरु पिक पञ्चमारावम् ।
काकाचलिरधुना ते कुलायमावृत्य रौति घोषेण ॥१५२॥

शृगालशशशार्दूलदूषितं दण्डकावनम् ।
पञ्चमं गायतानेन कोकिलेन प्रतिष्ठितम् ॥१५३॥

सन्त्यज्य कोकिलशिशो मधुरप्रवालं
माकन्दवृन्दमलिपोतमिलत्प्रसूनम् ।
निम्बे तु तिक्तहृदये बलिभुक्कुलाढ्ये
मौनेन तिष्ठसि यदीह वदाशु कार्यम् ॥१५४॥

सहकारे चिरं स्थित्वा सलीलं बालकोकिल ।
तं हित्वाद्यान्यवृक्षेषु विचरन् न विलज्जसे ॥१५५॥

हे कोकिलाखिललतासु फलानि सन्ति
सन्त्यज्य तानि ननु चूतलतां सपुष्पाम् ।
किं काङ्क्षसीह चरितुं फलमत्तुकामो
न ज्ञायते नृपतिसेवकभीषणोऽयम् ॥१५६॥

क्षुधितः

घोण्टा कुण्डलिनी प्रकामविषमं कान्तारमन्तर्वनं
गाहं गाहमरालकण्टकमुखच्छिन्नाङ्गकेशाम्बरः ।
कृच्छ्राद्दध्यगमद्धि वृक्षमधिकक्षुत्सेव्यवृक्षाशया
हन्त प्रादुरभूद् विपाकुलफलः किम्पाक एवान्तकः ॥१५७॥

खड्गमृगः

अयि वहसि ललाटे खड्ग शृङ्गं यदेकं
ननु कथमसि तस्माद्द्व्यशृङ्गेण तुल्यः ।
महिष इव चतुष्पाज् जन्तुरेवासि जात्या
परुषतमतनुस्त्वं नीचता ते क्व याति ॥१५८॥

अरे खड्ग पावा गजस्येव रूपं
लुलायेन तुल्यं ललाटेऽस्ति शृङ्गम् ।
स्थलीकूर्मतुल्यस्त्वचा क्रूरजन्तुः
कुतस्ते जनिर्नोहनीया तवैषा ॥१५९॥

### खदिरसार

विना खदिरसारेण हारेण हरिणीदृशाम ।
नाधरे जायते रागो नानुराग पयोधरे ॥१६०॥

### गङ्गा

स किमु सहेत सुधांशु स्मरहरभालानलज्वाला ।
शिशिरै शीकरनिवहै सिञ्चति सुरनिम्नगा नो चेत् ॥१६१॥

### गज

अन्तर्वसति मार्जारी शुनी वा राजवेश्मनि ।
बहिर्बद्धोऽपि मातङ्गस्तत कि लघुता गत ॥१६२॥

आपातालगभीरे मज्जति नीरे निदाघसन्तप्त ।
न स्पृशति पल्वलाम्भ पञ्जरशेषोऽपि कुञ्जर क्वापि ॥१६३॥

आलानबन्धनभयाकुशतीव्रपात-
माधोरणस्य चरणाहतितर्जन च ।
कण्ठीरवो यदि सहेत मदावलाना
पूजा कुत क्षितिभुजा सदनान्तरेषु ॥१६४॥

क्रीडाकारि तटाकवारिणि गतातङ्क न पङ्केरुहै-
र्वल्ली काचन सल्लकीतरुगता नार्कापिता हर्षत ।
नाश्लिष्टा करिणी करेण करिणा कामातुरेणामुना
दंष्ट्राभिर्विकटानन शिव शिव व्यालोकि पञ्चानन ॥१६५॥

गजस्य पङ्कमग्नस्य त्रपाकरमिद महत ।
पादमुद्धत्य यद गच्छन् हरिणोऽपि हसत्यसौ ॥१६६॥

जहीहि गुरुगर्जित जहिहि शुण्डया घीङ्कृत
परिभ्रम शनैर्वन किमु गजेन्द्र गर्वायसे ।
यथा न किल केसरी गिरिदरीषु निद्रा त्यजन्
विमूर्च्छयति जृम्भया सुभग तावकीन मन ॥१६७॥

त्यक्तो विन्ध्यगिरि पिता भगवती माता च रेवोज्झिता
त्यक्ता स्नेहनिबद्धबन्धुरधियस्तुल्योदया दन्तिन ।
त्वल्लोभान् ननु हस्तिनि प्रतिदिन बन्धाय दत्त वपु-
स्त्व दूरे क्रियसे लुठन्ति च शिर पीठे कठोराङ्कुशा ॥१६८॥

न कुर्याः प्राखर्यं किमपि करिपोत प्रतिभयं
हरीणां वेलेयं यदिह बहुवेलं विहरति ।
अकस्मादेतेषां कुटिलदृशि रोषस्पृशि मनाक्
निरर्थं भाविन्यो मदकरिदरिद्रा वनभुवः ॥१६९॥

निषेवन्तामेते वृषमहिषमेषाश्च हरिणा
गृहाणि क्षुद्राणां कतिपयतृणैरेव सुखिनः ।
गजानामास्थानं मदसलिलजम्बालितभुवां
तदेकं विन्ध्याद्रेर्विपिनमथवा भूपसदनम् ॥१७०॥

यूथान्यग्रे गतानि प्रबलबलभृतो बद्धवैरा मृगेन्द्रा
मूलादाकृष्यमाणाः सपदि तटरुहो भूरुहा निष्पतन्ति ।
दृष्ट्वा हृष्यन्ति हन्त प्रतिदिनमखिला भिल्लपल्ल्या अधीशा
हस्तालम्बाय केषां कलयतु वदनं पङ्कमग्नः करीन्द्रः ॥१७१॥

सान्द्रामोदवतीः स्वकीयवसतीः पङ्केरुहाणां ततीः
स्त्यक्त्वायं भ्रमरः करीन्द्र भवतामभ्याशमभ्यागतः ।
एतच् चेतसि सम्प्रधार्य जगतीविख्यातदानैस्तथा
युष्माभिः क्रियतां यथोपरमते हास्याय नास्यागमः ॥१७२॥

स्पर्धन्तां सुखमेव कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा
ग्राम्या वा वनवासिनो मदजलप्रस्निग्धगण्डस्थलाः ।
आः कालस्य कुतूहलं शृणु सखे प्राचीनपालीमलैः
प्रायः स्निग्धकपोलपालिरधमः कालोऽपि न स्पर्धते ॥१७३॥

गर्दभः

यद्यपि का नो हानिः परकीयां चरति रासभे द्राक्षाम् ।
असमञ्जसमिति मत्वा तथापि खलु खिद्यते चेतः ॥१७४॥

रे रे रासभ वस्त्रभारवहनात् कुग्रासमश्नासि किं
राजाश्वावसथं प्रयाहि चणकाभ्यूषान् सुखं भक्षय ।
सर्वान् पुच्छवतो हया इति वदन्त्यत्राधिकारे स्थिता
राजा तैरुपदिष्टमेव मनुते सत्यं तटस्थाः परे ॥१७५॥

गन्धः

नीलोत्पलस्य मत्स्यस्य पद्मस्य कुमुदस्य च ।
एकयोनिप्रसूतानां तेषां गन्धः पृथक् पृथक् ॥१७६॥

### गरुत्मान्

निजत्रोटीकोटीत्रुटितफणिराजन्यशिरस
शकुन्ताना पत्युर्गगनतलजङ्घालगरुत ।
दरिद्रग्रामीणस्थविरशिबिरप्रान्तपटल-
च्छदाग्रे जाग्रद्‌भिर्मशकनिशुभि क परिभव ॥१७७॥

दामोदरमुदराहितभुवन यो वहति लीलया गरुड ।
कस्य तरोरुपरिस्थान खिन्नोऽसौ श्रान्तिमपनयतु ॥१७८॥

अहिरहिरिति सभ्रमपद्गमितरजन किमपि कातरो भवतु ।
विहगपतेराहारे स तु सरलमृणालदलरचिर ॥१७९॥

### गिरिनिर्झर

कल्लोलसञ्चलदगाधजलैरलोलै
कल्लोलिनीपरिवृढै किमपेयतोयै ।
जीयात् स जर्जरतनुर्गिरिनिर्झरोऽत्र
यद्विप्रुषापि तृषिता वितृषीभवन्ति ॥१८०॥

### गुणग्राही

मार्जारो लभने न मञ्जुलशुकालापेन कौतूहल
कस्तूरीहरिणस्य सौरभभरै सिंहो न सन्तुष्यति ।
प्रीतिर्नास्ति मयूरताण्डवशतैर्व्याधस्य दुष्टे सदा
व्याप्ताया भुवि सन्ति केऽपि विरला सन्तो गुणग्राहिण ॥१८१॥

### गुणदोषविवेक

सुरभीभूय स्वयमपि परानन्दनश्चन्दनद्रु-
र्धेनुर्दत्ते रसमनुदिन दत्तघासानुरूपम ।
हत्वा मातृस्वयमयते हा स्वय वृश्चिकादि-
र्भुत्वाप्यन्न वमयति नृणा मक्षिका कुक्षिगापि ॥१८२॥

### गुणहीननिन्दा

वीणाप्येकगुणेन राजरमणीनीरन्ध्रपीनस्तन-
द्वन्द्वे खेलति शुष्कदारुनिचया नि सारतुम्बीफला ।
चञ्चत्पार्विकशर्वरीपरिवृढप्रौढप्रभाभासुर
मुक्ताजातमपीह निर्गुणतया योग्य न सम्भाव्यते ॥१८३॥

### गुण

गुणैरुत्तुङ्गता याति न तु जातिप्रभेदत ।
क्षीरोदधिसमुत्पन्न कालकूट किमुत्तम ॥१८४॥

गुणैरुत्तुङ्गतां याति किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिः गावः क्षीरविवर्जिताः ॥१८५॥

गुलिचिन्दः

सुवर्णसदृशं पुष्पं फलं रत्नसमं तथा ।
सम्प्राप्ते भ्रमरे पश्चाद् भ्रमाज् झणझणायते ॥१८६॥

घूकः

यद्यपि तरणेः किरणैः सकलमिदं विश्वमुज्वलं विदधे ।
तदपि न पश्यति घूकः पुराकृतं भुज्यते कर्म ॥१८७॥

चक्रवाकः

त्यज चक्रवाकि शोकं दधान धैर्यं सहस्व समयममुम् ।
अयमेव वासरमणिर्हरिष्यते शोकमूर्छां ते ॥१८८॥

चन्दनः

कति न सन्ति महीषु महीरुहा
सुरभिपुष्परसालफलादयः ।
सुरभयन्ति न केऽपि च भूरुहा-
निति यशोऽस्ति परं तव चन्दन ॥१८९॥

कालागुरौ सुरभितातिशयेऽपि सङ्गा-
दारभ्यते सुरभितापरपादपेऽपि ।
पाटीर पाटवमिदं तव सङ्गिवार्त-
स्तादात्म्यमेति कतरो न तरोः समूहः ॥१९०॥

जातः केलिकलावतीकुचतटीसौभाग्यमासादितुं
त्रैलोक्याधिपतेर्यशः कथयितुं भाले विपद्यार्पितुम् (?) ।
किं वाच्यं गुणगौरवस्य महिमा ख्यातोऽखिले भूतले
धिग् दैवं कलये यदत्र मलये भग्नः पटीरद्रुमः ॥१९१॥

पिष्टोऽपि दष्टोऽपि च कालसर्पै-
श्छिन्नोऽपि भिन्नोऽपि विदारितोऽपि ।
किं ब्रूम हे चन्दन सौम्यतां ते
लोकोत्तरं सौरभमेव धत्से ॥१९२॥

श्रीमच्चन्दनवृक्ष सन्ति बहवस्ते शाखिनः कानने
येषां सौरभमाश्रकं निवसति प्रायेण पुष्पश्रियाम् ।
प्रत्यङ्गं सुकृतेन तेन शुचिना ख्यातः प्रसिद्धात्मना
यः सौगन्ध्यगुणस्त्वया प्रकटितः पवासाविह प्रेक्ष्यते ॥१९३॥

आस्ते विधु परमनिर्वृत एव मौलौ
शम्भोरिति त्रिजगतीजनचित्तवृत्ति ।
अन्तर्निगूढनयनानलदाहदु:ख
जानाति क परमृते बत शीतरश्मे ॥१९४॥

इन्दु निन्दतु नाम वाथ नलिनी निन्दन्तु चक्राह्वया
नैवानेन सुधाकरस्य सुषमाहानिर्न वा दुर्यश ।
एतेनैव कृतार्थतास्य जनिता यन मेदमालम्बते
यज् ज्योत्स्नासु चिर चकोरपरिषच चञ्चूपुट न्यस्यति ॥१९५॥

कलास्तास्ता सम्यग् वहसि यदसि त्व द्विजपति-
र्द्युतिस्तादृड् नूत्ना जनिरपि च रत्नाकरकुले ।
बहु ब्रूम किं वा पुरहरशिरोमण्डनमसि
त्वदीय तत् सर्व शशधर कलङ्काद विफलितम ॥१९६॥

किरति प्रकर गवा प्रकर्ष सुमन स्वच्छतर विधौ कलानाम् ।
कति चेत् कलयन्ति यत् प्रबोध कति चेन् नेति स तत्स्वभाव एव ॥१९७॥

चन्द्र समाश्रयतु नाम तिथिस्त्वनेका
क्षीणस्य बिम्बपरिपूरणकारणाय ।
एव पुन सकलमण्डलपूर्णवर्ण
सा पूर्णिमैव खलु पूरयितु समर्था ॥१९८॥

जन्म क्षीरनिधौ तथैव विपुल पीयूषवर्ण वपु
सतापार्तिहर हरस्य शिरसि स्थान सदा सुन्दरम ।
तारानाथ निशामुखैकतिलक स्यातौषधीना पते
चन्द्र त्वा वसनाञ्चलस्य दशया सभावयाम कथम ॥१९९॥

जन्म क्षीरमहार्णवे सहभुव श्रीपारिजातादयो
बिम्ब यस्य सुधामय त्रिभुवनाधीशस्य मूर्ध्नि स्थिति ।
वृत्तिर्यस्य चराचरप्रियतमा तस्योदये केवल
सङ्कोच कमलस्य दुष्कृतिरसौ निन्द्यो न ताराधिप ॥२००॥

जानन्त्येव सदा चकोरनिकरा माधुर्यलुब्धान्तरा
दुग्धाब्धीश्वरभूधरेन्द्रवलभिग्मत्तेभमान्याकृते ।
चन्द्रस्योत्तममाधुरीधुर(?)धरद्धारासुधारोचिषा
माधुर्य किम् पङ्कलग्नहृदया जानन्ति भेकाधमा ॥२०१॥

तारागणाश्चन्द्रमस भजन्ते
न जातु नाथ नलिनाकराणाम् ।
एतावता तस्य किमस्ति हानि
र्ज्ञाता तयोरन्तरमेष लोक ॥२०२॥

त्वं भोः शम्भोर्निवससि शिरोदेशमाश्रित्य नित्यं
तत् त्वां याचे जगदुपकृतिव्याप्तिव्यग्रमिन्दो ।
यः सद्भावस्तव परिणतः कैरवे वा चकोरे
दृश्यस्तेन प्रतिनिशमसौ चक्रवाको वराकः ॥२०३॥

दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
मित्रावसानसमये विहितोदयोऽपि ।
चन्द्रस्तथापि हरवल्लभतामुपैति
नैवाश्रितेषु गुणदोषविचारणा स्यात् ॥२०४॥

ध्माता फालतलानलैः कवलिता कण्ठस्थहालाहलै-
रालीढाय जटाटवीविलुठितैराशीविषाणां गणैः ।
छन्ना भस्मभिराहतास्थिपटलैः क्लिन्नार्द्रचर्माम्बरैः
स्वीयां मुञ्चति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥२०५॥

नक्षत्राणि बहूनि सन्ति परितः पूर्णोदयान्यम्बरे
किं तैः शान्तिमुपैति दीर्घतिमिरं किं वाब्धिरुज्जृम्भते ।
किं स्यादार्तचकोरपारणविधिर्भ्रान्तः सुधादीधिते
तन् नूनं भुवनैकतापशमनः श्लाघ्यस्तवैवोदयः ॥२०६॥

नानन्दि कैरवमवर्धि न वाम्बुराशि-
रादीपि नाम्बरमहारि न वान्धकारः ।
धिग् दैवदुर्विलसितं यदसौ सुधांशु-
रभ्युद्यतश्च तमसा कवलीकृतश्च ॥२०७॥

निशाचरोऽपि दीनोऽपि सकलङ्कोऽपि चन्द्रमाः ।
चकोरीनयनद्वन्द्वमानन्दयति सर्वदा ॥२०८॥

निष्पीडितो यद्यपि दैवयोगान्
निशाकरश्चापि विधुन्तुदेन ।
तथापि पीयूषविशेषवर्षी
सुधाकरः कैरवकाननेषु ॥२०९॥

पूर्णः पङ्कजलोचनामुखतुलामायासि कालक्रमात्
क्षीणोऽपि क्षणदापते पशुपतेरायासि भूषास्पदम् ।
एतस्मिन्नथ सैंहिकेयकवलक्लेशे मनाग्वर्तिनि
त्वं साधारणवत् सुधाकर मुधा हा हन्त किं ताम्यसि ॥२१०॥

प्रकुर्वता सङ्गतिमिन्दुनाधुना
किं किं च लब्धं जगदीश्वरेण वै ।
कलङ्कहानिः सुरसिन्धुसङ्गमः
कलाक्षयित्वं च पदं तयोश्चकैः ॥२११॥

यद् वाञ्छन्ति चकोरकाः प्रतिदिनं ध्यायन्ति यत् कोरकाः
कासारेषु कुमुद्वतीवनभुवो नन्दन्ति यस्मिन् दृशः ।
सम्प्राप्तं रजनीमुखं सुखयितुं तच् छारदं सर्वथा
तस्मिन् पार्वणशर्वरीश भवता सम्प्राप्यता सद्यशः ॥२१२॥

प्रोषितवति रजनिकरे बन्धुतया न खलु कैरवाण्येव ।
म्लायन्ति किन्तु सहसा भुवनान्यपि तमसि मज्जन्ति ॥२१३॥

भीतो वाडववामतो जलनिधौ शम्भोः शिरः संश्रितः
तत्र त्र्यम्बकमौलिवासुकिविषज्वालावलीतर्जितः ।
तस्माल् लोकमनादिमं निपतितस्तत्रैव राहोर्मुखे
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥२१४॥

मारस्य मित्रमसि किं च सुधामयूख
शम्भावपि प्रणयिता प्रकटीकरोषि ।
विश्वासपात्रमसि यद् द्वियनोस्तयोर-
प्येतत्तव प्रकृतिशुद्धतनोश्चरित्रम् ॥२१५॥

यस्योदयेनैव दिशां प्रसाद-
स्तापापनोदोऽपि जगत्त्रयस्य ।
चकोरचञ्चूपुटपारणे तु
चन्द्रस्य तस्यास्ति कियान् प्रयासः ॥२१६॥

यातेयं भवता सहैव रजनी भावी विकासो दिशां
सूर्येणापि चिरं चकोरनिचयैः स्थेयं क्वचिन् कानने ।
उद्दामारुणचण्डभानुकिरणज्वाले जगन्मण्डले
कस्मै चन्द्र समर्प्य कैरवकुलं व्योमान्तमालम्बसे ॥२१७॥

राजानः कति वा न सन्ति जगति ख्याता निजाम्याशगान्
ये पुष्णन्ति बलीयसः परिचितांश्चित्रं न मन्यामहे ।
राजा राजति केवलं हिमकरः पुष्णाति दूरस्थिता-
ञ्ज्योत्स्नाभिर्लपितान् दिनेशमहसा म्लोष्ठो धरोर्वानिमाम् ॥२१८॥

वक्रोऽस्तु बाल्ये तदनु प्रवृद्धः
कलङ्कवानस्तु जडोऽस्तु चन्द्रः ।
महेशमौलौ च पदं दधातु
जायेत वन्द्यो विविधोपकारात् ॥२१९॥

विमलमना(?)विनुमाश्रितादघशरा विदितगुणाद्गुणगानमग्नचित्ता ।
उदयति भुवनसादृशीकराणां शशिनि रुचः प्रमदैः(?) शुभ्रकाणाम् ॥२२०॥

शङ्करशिरसि निवेशितपदेति मा गर्वमुद्वहेन्दुकले ।
फलमेतस्य भविष्यति तव चण्डीचरणरेणुमृजा ॥२२१॥

श्रीमाहेश्वरमौलिमण्डनमणिर्विश्वम्भरं लोचनं
त्वं रत्नाकरसम्भवः किमपरं भूदेवदेवो भवान् ।
यद् भालानलतङ्गदोश्वरभसाद् दन्दह्यसे नोग्रजाज्
जातं तत् किमिहास्ति ते सुमनसश्चित्रं कलानां निधे ॥२२२॥

सन्दूषितोऽसि पूर्णेन्दो चक्रवाकैर्मदोत्कटैः ।
किं चकोरास्त्वदायत्ता न सन्ति पृथिवीतले ॥२२३॥

हिमकर परभागं भूषयिष्यन् सुमेरो-
र्व्रजसि यदि तदाहं न क्षमः सन्निरोद्धुम् ।
इति तु बहुविधाभिः काकुभिः प्रार्थये त्वां
पुनरपि कुमुदानामेत्य हार्यो विषादः ॥२२४॥

चम्पकः

उद्यानपाल कलशाम्बुनिषेचनाना-
मेतस्य चम्पकतरोरयमेव कालः ।
अस्मिन् निदाघनिहते घनवारिणा वा
संवर्धिते तव वृथोभयथोपयोगः ॥२२५॥

कोपं चम्पक मुञ्च यावकजनैरायासितस्त्वं सखे
मा म्लासीः परितो विलोक्य तरुः कस्तेऽधिरूढस्तुलाम् ।
कोपश्चेन् नियतस्तवास्ति हृदये धात्रे तदा कुप्यतां
येन त्वं हि सुवर्णवर्णकुसुमामोदोऽद्वितीयः कृतः ॥२२६॥

यद्यपि खदिरारण्ये गुप्तो वास्ते हि चम्पको वृक्षः ।
तदपि च परिमलमतुलं दिशि दिशि कथयेत् समीरणस्तस्य ॥२२७॥

यन् नादृतस्त्वमलिना मलिनाशयेन
किं तेन चम्पक विषादमुरीकरोषि ।
विश्वाभिरामनवनीरदनीलवेषाः
केशाः कुशेशयदृशां कुन्तलीभवन्तु ॥२२८॥

रूपसौरभसमृद्धिसमेतं चम्पकं प्रति ययुर्न मिलिन्दाः ।
कामिनस्तु जगृहुस्तमशेषा ग्राहका हि गुणिनां कति न स्युः ॥२२९॥

सकलगुणनिधानं मां विहाय द्विरेफाः
परिमलपरिहीनं हन्त चुम्बन्ति धूर्तम् ।
इति मनसि विषादं मा कृथाः चम्पकोच्चै-
रिह मधुपसमाजे को विवेकावकाशः ॥२३०॥

सत्येकेऽपि महीरुहाः प्रतिदिनं संसवतमत्तालयः
तत्तादृग्गुणिनो लवङ्गलवलीमाकन्दकुन्दादयः ।
आशास्यं जनुरस्य चम्पकतरोर्यत् कोरकान्तर्दलं
स्वैरङ्गैरुपमाय राजरमणी साभ्रूयमालोक्ते ॥२३१॥

चातकः

आकस्मिककर्णैः प्राणान् धारयत्येव चातकः ।
प्रार्थनाभङ्गभीतोऽसौ शक्रादपि न याचते ॥२३२॥

आत्मन्ययाम्भोनिधिरेतु शोष
ब्रह्माण्डमासिञ्चतु वा तरङ्गैः ।
नास्ति क्षतिर्नोपचितिः कदापि
पयोदवृत्तेः खलु चातकस्य ॥२३३॥

ऊर्ध्वीकृतग्रीवमहो मुधैव
किं याचसे चातकपोत मेघम् ।
अत्यूर्जितं गर्जितमात्रमस्मि-
न्नम्भोधरे बिन्दुलवस्तु दूरे ॥२३४॥

के वा न सन्ति भुवि वारिवहावनंसा
हंसावलीवलयिनो जलसन्निवेशाः ।
किं चातकः फलमवेक्ष्य सुवक्त्रपाता
पौरन्दरीं कलयते नववारिधाराम् ॥२३५॥

के वामी प्रभवन्ति चातकतृषा विच्छेदसम्प्रत्यये
प्रागल्भ्य दधते न वाम्बु हरिता सन्तापशान्तावपि ।
प्रक्षीणास्तरणित्विषोऽपि न तिरोधातु समर्थाः पुनः
क्षुद्रा धिक् चलयन्ति केवलमपां राशेः पयस्तोयदाः ॥२३६॥

चातक धावसि किं घनबुद्धया
करिणमुद्वीक्ष्य भ्रमयातः ।
नहि दास्यति स स्वरसदृशाना
गजपतिदानं मधुपकुलेभ्यः ॥२३७॥

चातकेन तृषितेन यदम्भो-
बिन्दुमात्रममलं परिलब्धम् ।
दैवतस्तदपि वातनिपाता-
दन्यतः पतितमास्यमपास्य ॥२३८॥

पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥२३९॥

भ्रातश्चातक नीत एव सरसः कालस्त्वया चेत् सुखं
स्वल्पान्येव दिनानि सन्ति विपदो मानच्युतिं मा कृथाः ।
भूयः कातरनेत्रपालि सरसः पाथः किमुद्वीक्षसे
लाभश्चञ्चुपुटोदकं तु भवतो दीर्घं कुले दुर्यशः ॥२४०॥

यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम् ।
तदपि न कुप्यति जलदो गतिरिह नान्या यतस्तस्य ॥२४१॥

वापी स्वल्पजला सरो विषमयं नीचावगाहो ह्रदः
स्वच्छस्वादुसुशीतला त्रिपथगा वैकुण्ठपादाग्रजा ।
नीचः क्षारतरो महाम्बु जलनिधिर्गण्डूषमात्रं मुने-
स्तन् मानी खलु चातको जलमुचामुच्चैः पयो वाञ्छति ॥२४२॥

वृथा मुदा धावसि चातक त्वं
नायं घनः किन्तु करी मदान्धः ।
न त्वादृशेभ्यो विदधाति दानं
मातङ्गदानं मधुपेभ्य एव ॥२४३॥

शक्यते येन केनापि जीवनेनापि जीवितुम् ।
किन्तु कौलव्रतोद्भङ्गप्रसङ्गः परिदुःसहः ॥२४४॥

## चित्रम्

कुसुमानि लिखन्तु नाम चित्रे
कतिचित् कालविशेषलब्धशिक्षाः ।
सुरभित्वममूनि किं लभन्ते
कथमेतेषु रसं पिबन्ति भृङ्गाः ॥२४५॥

## चूतः

अविश्रीरुद्याने त्वमसि भवतः पल्लवचयो
धुरीणः कल्याणे तव जगति शाखा श्रमहरा ।
मुदे पुष्पोल्लेखः फलमपि च तुष्ट्यै तनुभृतां
रसाल त्वां तस्मात् स्पृशति शतशः कोकिलकुलम् ॥२४६॥

अरविन्देषु कुन्देषु रमितं कालयोगतः ।
अये माकन्द जानीहि तवैवायं मधुव्रतः ॥२४७॥

यद्यपि दिशि दिशि तरवः परिमलबहुलाश्च पारिजाताद्याः ।
तदपि रसालस्त्वेकः कोकिलहृदये सदा वसति ॥२४८॥

आकर्ण्याम्रफलस्तुतिं जलमभूत् तन नारिकेलान्तरं
प्रायः कण्टकितस्तथैव पनसः जातं द्विधोर्वारुकम् ।
आस्तेऽधोमुखमेव कादलफलं द्राक्षाफलं क्षुद्रतां
श्यामत्वं बत जाम्बवं गतमहो मात्सर्यदोषादिह ॥२४९॥

आस्तां गाढतरानुशीलनविधिः संस्पर्शनं दूरतः
सम्भाषाविषयीकृतो न न मनागक्ष्णोः पदं प्रापितः ।
किं ब्रूमः सहकार तावकगुणानस्मादृशैर्दुर्लभान्
सौरभ्येण यदध्वगान् मुहुरहो प्रीणासि दूरादपि ॥२५०॥

आम्र यद्यपि गता दिवसास्ते
पुष्पसौरभफलप्रचुरा ये ।
हन्त सम्प्रति तथापि जनानां
छाययैव दलयस्यतितापम् ॥२५१॥

आयान्ति निर्यान्ति न वा कियन्तो
द्विजाः समादाय फलं दलं च ।
त्वय्येव पुंस्कोकिलकूजितानि
परोपकारप्रथिते रसाल ॥२५२॥

उत्फुल्लरम्य सहकार रसाल बन्धो
कूजत्पिकावलिनिवास तथा विधेहि ।
गुञ्जद्भ्रमद्भ्रमरकस्त्वयि बद्धतृष्णो
नान्यान् प्रयाति पिचुमन्दकरीरवृक्षान् ॥२५३॥

उन्मीलद्रसबिन्दुगन्धकुसुमावल्यो वसन्तोदये
कान्ताः कोमलपल्लवा कति कति क्रीडावने सन्ति नो ।
सौभाग्यैकनिधे रसाल तदपि श्रीमञ्जरीशालिन-
स्त्वत्तोऽन्यत्र च कुत्रचित् मधुकरश्रेणी न विश्राम्यति ॥२५४॥

कति कति न वसन्ते वल्लयः शाखिनो वा
किसलयसुमनोभि- शोभमाना बभूवुः ।
तदपि युवजनानां प्रीतये केवलोऽभू-
दभिनवकलिकालीभारशाली रसालः ॥२५५॥

कुन्देऽरविन्दे कुमुदे कदम्बे
यथाकथंचित् समयं नयन्ति ।
प्राप्ते वसन्ते पुनरुत्तरङ्गाः
रसाल जानीहि तथैव भृङ्गाः ॥२५६॥

गर्वं मा कुरु शर्करे तव गुणान् जानन्ति राज्ञां गृहे
ये दीना धनवर्जिताश्च कृपणाः स्वप्नेऽपि पश्यन्ति नो ।
आम्रोऽहं मधुकूपकैर्मम फलैस्तृप्ता हि सर्वे जनाः
हे रण्डे तव किं गुणा मम फलैस्तुल्यं न किंचित्फलम् ॥२५७॥

चिरश्रान्तो दूरादहमुपगतो हन्त मलयात्
तदेकं त्वद्गेहे तरुणि परिणेष्यामि दिवसम् ।
समीरेणोक्तैवं नवकुसुमिता चूतलतिका
धुनाना मूर्धानं नहि नहि नहीत्येव वदति ॥२५८॥

छाया रम्या नु शाकं फलमपि रसवत् सद्द्विजानां निवासः
सन्तप्तानां च तापं शमयति निखिलं सर्वदायं रसालः ।
तस्मिन्नुन्मत्तकीराः प्रसभमुपगतान् भर्त्सयत्यप्रतोऽस्तः
सोऽप्येकस्तत्र नो चेदयमपि च समः कल्पवृक्षेण नूनम् ॥२५९॥

अपाश्यामा जम्बूर्दलितहृदयं दाडिमफलं
सशूलं संधत्ते हृदयमभिमानेन पनसः ।
भयादन्तस्तोयं तरुशिखरजं लाङ्गलिफलं
समुद्भूते चूते जगति फलराजे प्रसरति ॥२६०॥

त्वं सामान्यतरुभ्रमेण सकलक्षोणीरुहश्मापतौ
माकन्देऽपि किरात पातय मुधा मास्मिन्कुठारं हठात् ।
एष श्लाघ्यजनस्य जीवितमलिव्यूहस्य यन्धुर्मधोः
सर्वस्वं मकरध्वजस्य विजयामात्यः पिकानां गुरुः ॥२६१॥

दिङ्मण्डलं परिमलैः सुरभीकरोषि
सौन्दर्यमावहसि लोचनलोभनीयम् ।
हुंहो रसाल फलवर्य तथापि दूये
यद् ग्रन्थिलं च कठिनं हृदयं बिभर्षि ॥२६२॥

फलितस्य रसालशाखिनः
फलदानव्यसनैकशिल्पिनः ।
विनिपात्य ददातु कः फलं
श्रमसुप्ताध्वगपाणिपल्लवे ॥२६३॥

भूरिशोऽपि च वसन्ति कानने शाखिनः फलविशेषशालिनः ।
कोकिलस्य तदपीह मानसं नो रसालमपहाय तुष्यति ॥२६४॥

भो भोश्चूत चिरादयं मधुकरो विस्मृत्य वृत्ति निजां
कावत्काञ्चनशुद्धबुद्धिरभवद् येन त्वया पोषितः ।
तस्मिंस्त्वय्यधुना मुधा विधिवशाद् विच्छेदिते सोऽप्यलिः
कान्तारे प्रतिपादपं वद कथं कुक्षिम्भरः सञ्चरेत् ॥२६५॥

यदेकस्मिन् वर्षे न फलति रसालस्तररय
पिक किं काकेष्ट फलितमपि निम्बं व्रजति वा ।
व्रजन् ग्लानिं ग्लानिं न वदति च कस्यापि पुरत
स्मरन् वारवार पुनरपि रसाल मृगयते ॥२६६॥

यद्यध्वनीन चिरमध्वनि घर्मखिन्न
कासारतीररुहमाश्रय नम्रमाम्रम ।
छायां न केवलमित श्रमिता लभन्ते
काम पचेलिमफल विमल जल च ॥२६७॥

येऽमी आमुकुलोदगमात प्रतिदिन त्वामाश्रिता षटपदा
ते भ्राम्यन्ति फलाद बहि कथमहो दृष्टवा न सम्भाषसे ।
ये कीटास्तव दृष्पथ न च गतास्ते त्वत्फलाभ्यन्तरे
धिक त्वा चूततरो परापरपरिज्ञानानभिज्ञो भवान ॥२६८॥

रे रे रसाल तरुसार वचो विधेहि
वासन्तिकीं स्वफलपल्लवपुष्पलक्ष्मीम ।
तावद् विकस्वर पिकद्विजसात् कुरु द्राङ
न व्यग्रितोऽसि कलभै शलभैश्च यावत ॥२६९॥

वेत्ता कोकिल एव ज्ञाता च रसाल एव नियतमिदम ।
य पञ्चमनमुद्गायति यस्यास्यिषु पुलकमुकुलानि ॥२७०॥

शान्ता घर्मकणा श्रम शिथिलितस्तीर्णस्तृषामुद्गमो
वारवारमुदारकोकिलरवरानन्दित मानसम् ।
सर्वं प्राप्तमभीप्सित तव तले चूत प्रसन्नद्विज
श्रेणीगुञ्जित रञ्जिताखिलमनो यामो वय स्वस्ति ते ॥२७१॥

सौरभ्यगर्भमकरन्दकरम्बितानि
पङ्केरुहाण्यपि विहाय समागतस्त्वाम ।
संसारसार सहकार तथा विधेहि
येनोपहासविषयो न भवेद् द्विरेफ ॥२७२॥

छाग

साधुत्वमपि दोषाय च्छाग लोकातिशायि यत ।
अत एव हि सर्वेषा हिंसनीयोऽसि देहिनाम् ॥२७३॥

छाया

याते यातमथ स्थिते स्थितमुपर्यालोकिते लोकित
यद् यद् राजशुकोऽयमाकलयते शुद्धान्तमध्यस्थित ।

तत् सर्वं मणिभित्तिमेत्य भवता छायाशुकाङ्गीकृतं
तस्मिन् कर्णसुखं वितन्वति गिरस्तूर्ष्णीं त्वया स्थीयते ॥२७४॥

जन्मान्तरपापफलम्

मर्यादानिलयो महोदधिरयं रत्नाकरो निश्चितः
सर्वाशापरिपूरकोऽनुगमितः सम्पत्तिहेतोर्मया ।
शम्बूकोऽपि न लभ्यते किमपरं रत्नं महार्घं परं
दोषोऽयं न महोदधेः फलमिदं जन्मान्तरीयं मम ॥२७५॥

जम्बीरः

कान्तिस्ते कनकाचलप्रतिनिधिः कान्ताकुचस्पर्धि ते
सौभाग्यं क्षितिपालदर्शनविधौ त्वत्पूर्वकं दर्शनम् ।
सौरभ्यं सकलातिशायि भवतो जम्बीर किं ब्रूमहे
कर्पूरप्रतिकूलता यदि न ते त्वय्येव सर्वे गुणाः ॥२७६॥

जलबिन्दुः

हे नीरबिन्दुक सरोजदलाश्रयेण
मुग्धान् विलोभयसि मौक्तिकडम्बरश्रीः ।
आदाय पाणिषु परीक्षितुमक्षमस्त्वं
मुक्ताफलैः किमिति मत्सरमातनोषि ॥२७७॥

जोरीगः

उल्लीवनसमूहेषु जोरीगः कोकिलायते ।
सालीजाण्डसभामध्ये सातानिः पण्डितायते ॥२७८॥

ज्येष्ठादेवी

ज्येष्ठादेवि नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
इतः परं श्रीभगिनि न मां पश्य कदाचन ॥२७९॥

झञ्झावातः

जातं प्राभवमद्य ते विधिवशात् किञ्चित् तदप्यन्ततो
झञ्झामारुत मासमात्रमथवा मासद्वयं स्थास्यसि ।
एतस्मिन् वनवाटिकाः कति कति ध्वस्यं त्वयोत्पाटिता
हा वाप्यः कति शोषिताः कति दिशो धूलीभिरुद्धूलिताः ॥२८०॥

टिट्टिभः

कृत्वोत्तानं चरणयुगलं शेषसे टिट्टिभ त्वं
जात्वाकाशस्त्वदुपरि पतेदित्यनर्थभ्रमेण ।

यद्याकाशो ननु गुरुतया पातयोग्यो ययार्थं
चूर्णीभूत परमवयवं किं भवेस्त्व तदानीम् ।।२८१।।

तटाक

उद्दामाम्बुदवर्धमानशिखिनीकेकातिरेकाकुले
सम्प्राप्य सलिल स्थलेष्वपि सदा निस्तर्षवर्षागमे ।
भीष्मग्रीष्मभटे परस्परभयादालोकमान मुहु-
र्दीन मीनकुल न पालयसि चेत कासार का सारता ।।२८२।।

विहगैर्गत मधुकरैश्चलित
प्रकरैं प्रयातमपि पद्मदृशाम् ।
विभवे गते सकलमेव गत
ध्रुवमेकमञ्चति यश सरस ।।२८३।।

सोपानानि तिरोहितानि पदवी छन्ना तृणैर्नूतनं
कालुष्य पयसा विलोक्य शनकैरुड्डीय हसा गता ।
माधुर्य न मधुव्रतोदितगिरा पद्मानि मग्नानि के
भेकानामिह गर्जित परमहो वृद्धचैव नष्ट सर ।।२८४।।

तमालः

पास्यन्ति कस्य कुसुमे मधुपा मधूनि
स्थास्यन्ति कस्य शिखरेषु विहङ्गमाला ।
इत्येव शोचति पर परितो विसारि
दावाग्निमग्नवपुरेष तरुस्तमाल ।।२८५।।

ताम्रपर्णी

मलयस्य गिरेरपत्यमादौ तदनु भ्रातृमती पटीरवृक्षैं ।
किमु चित्रमपा निधे कलत्र तटिनी काचन मौक्तिकानि सूते ।।२८६।।

ताम्बूलम्

किं वीरुधो भुवि न सन्ति सहस्रशोऽन्या
यासा दलानि न परोपकृति भजन्ते ।
एकैव वल्लिषु विराजति नागवल्ली
या नागरीवदनचन्द्रमलङ्करोति ।।२८७।।

तारा

असन्निधाने हे तारा प्रकाशाध्वेऽर्कसोमयो ।
तत्प्रकाशसमीपे तु न दृश्यध्वे कदाचन ।।२८८।।

तारा हिमांशोर्यदसन्निधाने
विभाय यूयं परिपूर्णशोभाः ।
तत्सन्निधाने न तथा कथं नु
पतिव्रता इत्युररीक्रियध्वे ॥२८९॥

तालवृक्षः

अये ताल श्रीडां व्रज गुरुतया भाति न भवान्
फलं न च्छाया नो कठिनपरिवारो हि भवतः ।
इयं धन्या धन्या सरलकदली सुन्दरदला
परात्मानं मन्ये सुखयति फलेनामृतवता ॥२९०॥

जगत्प्राणे प्रौढे निकटमुपयाते सति हठाद्
विनम्रा आम्राद्याः शुकपिकवचश्चाटुपटवः ।
सुराभाण्डं कण्ठे वहति ननते तालहतके
सुदुर्वृत्ते तस्मिन् क्षतिरिह पुनः का च महताम् ॥२९१॥

तुम्बी

एके तुम्बा यतिकरगताः पात्रतामानयन्ति
गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः ।
एके तावद् ग्रथितसगुणा दुस्तरं तारयन्ति
तेषां मध्ये ज्वलितहृदया रक्तमेके पिबन्ति ॥२९२॥

तुला

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु समा ।
उचितज्ञाऽसि तुले किं तुलयसि गुञ्जाफलैः कनकम् ॥२९३॥

दमनः

यद प्रादुर्भावावधि परिमलावस्थितदृशा
जगत्यां विख्याता दमन कमनीयास्तव गुणाः ।
तथाप्यस्मिन् भृङ्गे मधुरसपिपासापरवशे
दृढप्रेमाबद्धे कथय कथमौदास्यमकरोः ॥२९४॥

दाडिमः

मयि जीवति बीजाढ्ये किमन्ये बीजपूरकाः ।
इति सञ्चिन्त्य मनसा विदध्रे दाडिमीफलम् ॥२९५॥

### दाता

एक कर्णमहीपति प्रतिदिन लक्षाधिका याचना·
कस्मै किं वितरिष्यतीति मनसा चिन्ता वृथा मा कृथा ।
आस्ते किं प्रतियाचक सुरतरु प्रत्यम्बुज किं रवि·
चन्द्र किं प्रतिकैरव प्रतिलतागुल्म किमम्भोधर ॥२९६॥

### दारिद्र्यम

दारिद्र्य शोचामि भवन्तमेव-
मस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये
ममेति चिन्ता क्व गमिष्यसि त्वम ॥२९७॥

गतास्ते दिवसा यत्र हृयवज्ञा कल्पशाखिनाम् ।
औदुम्बरफलेभ्योऽपि स्पृहयामोऽद्य जीवितुम् ॥२९८॥

### दीप

न मणेरितोऽधिका भा नो मृदुता न प्रकाशसमता वा ।
अचिरस्थितिरिति दीपो नहि बहुमूल्योऽभवत् प्राय· ॥२९९॥

प्रदीप किमु कुप्यसि प्रलयमारुतप्रज्वलत-
प्रभापटलपाटलप्रकटपावकव्यक्तये ।
त्वमङ्ग किमु कामिनीकुचतटीपटीपल्लव-
प्रकम्पनपरिस्फुरत्पवनलेशपारङ्गत ॥३००॥

बहिरतिनिर्मलरूप दहतस्त· दीप दैवतो जगति ।
अवगतमचिरादान्तरमौज्ज्वल्य कज्जलद्वारा ॥३०१॥

या कान्ति वहसि परा प्रदीप भद्र ।
स्वीयासाविति हृदि मा स्म मन्यथा(?)स्त्वम् ।
सस्नेहे त्वयि निशि भानुनाहितासौ
नैव चेदहनि सति क्व वा गता सा ॥३०२॥

रे रे दीप तिरस्कृताखिलतमस्तोमारिवर्गस्य ते
रात्रौ गूढनिजाङ्गपातिशलभाघातेन किं पौरुषम् ।
तत् कर्माचर येन तावकयशो भूयात् प्रभाते पुन
न स्नेहो न च सा दशा नहि पर ज्योति· पर स्थास्यति ॥३०३॥

### दुर्जन.

कस्तूरिकां तृणभुजामटवीचराणा
विन्यस्य नाभिषु वधाय वृथा चकार ।

मूढो विधिः स किल दुर्जनलोलजिह्वा-
मूलेषु निक्षिपति चेत् सकलोपकारः ॥३०४॥

खलः करोति दौरात्म्यं मलः पतति साधुषु ।
रावणेन हृता सीता बन्धनं तु महोदधेः ॥३०५॥

दुर्वृत्तसङ्गतिरनर्थपरम्पराया
हेतुः सतां भवति किं वचनीयमत्र ।
लङ्केश्वरो हरति दाशरथेः कलत्रं
प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ॥३०६॥

दुर्लभगुणाः

कवित्वे वादित्वं कनककुसुमे सौरभगुणो
धनित्वे दातृत्वं विषतरुफले स्वादुरसता ।
कुलीने सौजन्यं कुवलयदले रागरचना
नरेन्द्रे विद्वत्ता परभृतमुखे मानुषवचः ॥३०७॥

देशविशेषः

छेद्यं चन्दनचूतचम्पकवनं रक्षा च शाखोटके
हिंसा हंसमयूरकोकिलगणे काके च बह्वादरः ।
मातङ्गे तुरगे खरे च समता कर्पूरकार्पासयो-
रेषा यत्र विचारणा गुणगणे देशाय तस्मै नमः ॥३०८॥

द्राक्षा

यद्यपि न भवति हानिः परकीयां चरति रासभे द्राक्षाम् ।
असमञ्जसमिति मत्वा तथापि खलु खिद्यते चेतः ॥३०९॥

धनम्

सतां धनं साधुभिरेव भुज्यते
दुरात्मभिर्दुश्चरितात्मनां धनम् ।
शुकादयश्चूतफलानि भुञ्जते
भवन्ति निम्बानि च काकभोजनम् ॥३१०॥

धुत्तूरः

धुत्तूर कण्टकफलप्रतिरोधबुद्ध्या
वैरं वृथैव कुरुषे पनसेन सार्धम् ।
सन्तो हसन्ति न भजन्ति च चेतसा त्वां
भ्रान्ता भवन्ति पुरुषास्तव सेवनेन ॥३११॥

धुत्तूर धूर्त तरुणेन्दुनिवासयोग्य-
स्थाने पिशाचपतिना विनिवेशितोऽसि ।
ि कैरवाणि विकसन्ति तम प्रयाति
चन्द्रोपल स्रवति वारिधिरुपैति वृद्धिम् ॥३१२॥

माधुर्यसाराधरितामृतस्य
तत् कण्टकित्व पनसस्य सहेम ।
उन्मादिनो मातुलपुत्रकस्य
कथ सहामो बत कण्टकित्वम् ॥३१३॥

रे रे धुत्तूर भित्ते परिमृदितमृद क्वापि कोणे जनित्वा
प्राप्याभिख्या तदाख्या कनकमिति पुन काञ्चनस्यापि लोके ।
मन्द मन्द स्मरारेर्मणिमुकुटतटे तत्र लब्ध्वावकाश
नो जानीष क्लेश स्मरसि न च पुन पूर्ववृत्तान्तलेशम् ॥३१४॥

नगरम

इह नगरे प्रतिरथ्य भुजङ्गसरुद्धसञ्चारे ।
प्रियसखि मम मतमेतन नकुलप्रतिपालन श्रेय ॥३१५॥

नदी

गङ्गाप्रवाह गिरिशैकशिर स्थितस्य
युक्त तवार्णवमुपैतुमनिह्नवेन ।
यत् त्व पथि स्पृशसि भूरिनदान्तराणि
तत ते न युक्तमिति वक्ति पृथग्जनोऽपि ॥३१६॥

यास्यति जलधरसमयस्तव च समृद्धिर्लघीयसी नूनम ।
भविता तटिनि तटद्रुमपातनमेक चिरस्थायि ॥३१७॥

नारिकेल

भो नारिकेल तव मस्तकभेदकाना
साध्य भवेत तव जल कठिनस्वरूप ।
नाह त्वदीयसलिलग्रहणे समय-
स्त्वत्यन्तखेदविमुख शुकराजबाल ॥३१८॥

नासाभूषणम्

हारस्यापि दुरापमस्ति भुवने हे नासिकाभूषण
त्वत्सौभाग्यमिति प्रतीहि वनितावक्त्रेन्दुकान्तिप्रद ।
या कान्ता तनुसङ्गमाय सहने नाल्पविभेदव्यथा
सा नासापुटभेदनादपि भवत्सङ्ग यतो वाञ्छति ॥३१९॥

निम्बः

पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः ।
अपि च पिचुमन्दमुकुले मौकुलिकुलमाकुलं मिलति ॥३२०॥

विमलतरदलैरपि प्रवालैरपि कुसुमैरपि तिक्ततां विदित्वा ।
उपवससि सखे फलाशया किं परिणतवानपि तिक्त एव निम्बः ॥३२१॥

शर्कराशतभारेण निम्बवृक्ष उपासितः ।
पयसा सेवितो नित्यं न निम्बो मधुरायते ॥३२२॥

परशुरामः

त्वं जामदग्न्य जननीवधपातकेन
सन्दूषितः क्रतुविदां धुरि नाऽभविष्यः ।
गीर्वाणवन्द्यचरणस्तव चन्द्रमौलि-
राचार्यकं स भगवान् यदि नाकरिष्यत् ॥३२३॥

पलाण्डुः

कर्पूरधूलीरचितालवालः
कस्तूरिकाकल्पितदोहदश्रीः ।
हिमाम्बुपूरैरभिषिच्यमानः
प्राञ्चं गुणं मुञ्चति किं पलाण्डुः ॥३२४॥

पलाशः

उपनदिपुलिने महापलाशः
पवनसमुच्चलदेकपत्रपाणिः ।
दवदहनविनष्टजीवितानां
सलिलमिवैष ददाति पादपानाम् ॥३२५॥

किंशुके किं शुकाः कुर्युरारामाशानिरोधिनि ।
महोन्नते पल्लविते पुष्पिते फलितेऽपि वा ॥३२६॥

किंशुक किं शुकमुखवत् कुसुमानि विकासयस्यनिशम् ।
यस्यां जनोऽनुरागी सा गौरेतैः कदापि नोच्चार्या ॥३२७॥

त्यज किंशुक पुष्पिताभिमानं
निजशीर्षे भ्रमरोपसेवनेन ।
विकसन्नवमालिकावियोगात्
कुरुते वह्निधिया त्वयि प्रवेशम् ॥३२८॥

मा किंशुक प्रकटयात्मनि मौनमुद्रां
मन्मस्तके विचरतीति मधुव्रतोऽयम् ।

यन् मालतीविरहवेदनया त्वदीय
वृष्ट्या प्रसूनमुपयात्यनलभ्रमेण ॥३२९॥

पितुरपि पुत्रस्य विशेष

कुम्भ परिमितमम्भ पिबति पपौ कुम्भसम्भवोऽम्भोधिम् ।
अतिरिच्यते सुजन्मा कश्चिज जनकान् निजेन चरितेन ॥३३०॥

पिपीलिका

योजनाना सहस्राणि शनैर्याति पिपीलिका ।
अगच्छन् वैनतेयोऽपि पदमेक न गच्छति ॥३३१॥

प्रभुपरिग्रह

प्रसिद्धिहेतुर्भूतानां प्राय प्रभुपरिग्रह ।
सहस्र जलधौ शङखा पाञ्चजन्यस्तु विश्रुत ॥३३२॥

बक

नैर्मल्य वपुषस्तवास्ति वसति पद्माकरे जायते
मन्द याहि मनोरमा वद गिर मौन च सम्पादय ।
धन्यस्त्व बक राजहसतुलना प्राप्तोऽसि किं तैर्गुणै-
र्नीरक्षीरविभागकर्मनिपुणा शक्ति कथ लभ्यते ॥३३३॥

बडवानल

तेजासि यस्य प्रशम प्रयान्ति
वारां प्रवाहेण स वह्निरन्य ।
अय पुनर्वाडवनामधेय
समुद्रमापीय बिभर्ति तेज ॥३३४॥

बर्बूर

आमूलाग्रनिबद्धकण्टकतनुर्निर्गन्धपुष्पोद्गम-
श्छाया न श्रमहारिणी न च फल क्षुत्क्षामसतर्पणम् ।
बर्बूरद्रुम साधुसङगरहित पन्थानमाक्रामसि
त्वन्येषां फलशालिना फलवता गुर्वी वृतिर्जायते ॥३३५॥

बाला

ये शिरसा निहिता अपि न भवन्ति सजे समानसुखदुःखा ।
चिकुरा इव ते बाला एव जरापाण्डुभावेऽपि ॥३३६॥

बिडालः

किं कीरवत् तव वचो मधुरं बिडाल
किं व्याघ्रवद् बलपराक्रमिता तवास्ति ।
किं फेरुवन् मतिबलं समयोचितं ते
निर्लज्जतैव तव वृत्तिकरी बभूव ॥३३७॥

मा गर्वमुद्वह बिडाल महीपतीना-
मन्तःपुरं मणिमयं निलयो ममेति ।
पट्टाभिषेकसमये पृथिवीपतीनां
बाह्यस्थितस्य कलभस्य तु मण्डनश्रीः ॥३३८॥

रे रे बिडाल परिगर्जसि मां विलोक्य
कीरं मनोहरमिमं निजपञ्जरस्थम् ।
श्वानं विलोक्य न हि दर्शयसि स्ववीर्यं
स्वदेहपाटनपटुं दशनैः करालैः ॥३३९॥

क्षीरोदधेश्च गाम्भीर्यं जानाति मथनाद्धरिः ।
लेहनाय तटं प्राप्तः कथं विद्याद् बिडालकः ॥ ३४०॥

बिडालभक्षितः

बिडालभक्षिते दुःखं यादृशं गृहकुक्कुटे ।
न तादृङ्ममताशून्ये कलविङ्केऽथ मूषिके ॥३४१॥

भेकः

गङ्गादीनां सकलसरितां प्राप्य तोयं समुद्रः
किंचिद् गर्वी न भवति पुनर्दिव्यरत्नाकरोऽपि ।
एको भेकः परममुदितः प्राप्य गोष्पादनीरं
को मे को मे रटति बहुधा स्पर्धया विश्वमुच्चैः ॥३४२॥

दिव्यं चूतरसं पीत्वा गर्वं नायाति कोकिलः ।
पीत्वा कर्दमपानीयं भेको बकबकायते ॥३४३॥

मत्स्यविशेषः

क्षारं वारि न चिन्तितं न गणिताः क्रूराश्च नक्रादयः
चञ्चद्वीचिकदम्बडम्बरमिलत्त्रासोऽपि दूरीकृतः ।
मध्येऽम्भोनिधि मत्स्यरङ्क भवता झम्पः कृतो लीलया
सम्पत्तिर्मकरार्जनं विपदिह प्राणप्रयाणावधिः ॥३४४॥

वक विधातरि कथ विपदां निर्वृत्ति
कैवत्तककशकरग्रहणाच्च च्युतोऽपि ।
जाले पुनर्निपतित शफरो वराक
स्रस्तस्ततो पि गलतो गिलितो बकेन ॥३४५॥

मधु

अस्मिन केलिवन सुगन्धपवन क्रीडत्पुरन्ध्रीजन
गुञ्जन्भृङ्गकुले विशालबकुले कूजत्पिकैसकुले ।
उन्मीलन्नवपाटलापरिमले मल्लीप्रसूनाकुल
यद्यत्रापि न मालती विकसिता तत कि न रम्यो मधु ॥३४६॥

मयूर

अहमस्मि नीलकण्ठ तव खलु तुष्यामि शब्दमात्रेण ।
नाह जलधर भवतश्चातक इव जीवन याचे ॥३४७॥

उत्तसाय सख मयूर भवतस्तापिच्छपिच्छाभरा
देक चन्द्रकमप्ययत्नसतो दत्त न रोमाप्यसौ ।
व्याधास्तु प्रसभ निरुध्य चरणरापीडच हित्वा घृणा
मादायास्य कलापमङ्गणभव समाजन तन्वते ॥ ३४८॥

रे रे शिखावल शिवाभरणाय बह
मेक दिशन्ननुनयान मम कि ददासि ।
भिल्लाय वामचरण हृदय निधाय
निलुञ्च्यते दिशसि निर्दयमर्थ्यमान ॥३४९॥

समन्तादाक्रान्ता दवदहनसघ शिखरिण
किरातराकीर्णा करकलितकाण्डवनभुव ।
बिडालरालीढा सपदि सरसीना परिसरा
शिखण्डी पाण्डित्य निजमहह कुत्र प्रकटयत ॥३५०॥

मरकत

आसीत पूव विमलजलधौ मण्डन भूपतीना
नारीणा च प्रबलमुकुट काञ्चनन प्रसगात ।
तत्रैवद्ध कथमिह महो काचखण्डन साथ
भिल्लीकण्ठ मरकतमण कामवस्था गतोऽसि ॥३५१॥

मलयाचल

विद्योतन्ते कति न गिरयस्तेषु कि नोदयन्ते
शाखावन्त खदिरबदरीशालशाखोटकाद्या ।

धन्यस्तावन् मलयशिखरी यत्र जातास्त एव
स्वैरामोदैस्त्रिभुवनमथ प्रीणयन्तः स्फुरन्ति ॥३५२॥

मल्लिका

न च गन्धवहेन चुम्बिता न च पीता मधुपेन मल्लिका ।
निहतैव कठोरशाखया परिणामस्य जगाम गोचरम् ॥३५३॥

महान्तः

मनस्वी म्रियते वापि स्वोत्कर्षं नैव मुञ्चति ।
अपि निर्वाणमायाति नानलो याति शीतताम् ॥३५४॥

महिषः

नीलतया स्थूलतया दूरतया दानलोलुपैर्मधुपैः ।
धावितमिभराजधिया हन्तासीदन्ततो महिषः ॥३५५॥

मानसम्

नो वा कियन्तः परितः स्फुरन्ति
जलाशया निर्मलभूरितोयाः ।
सदावदातं चिरमेकमेव
हंसस्य विश्रामपदं वदन्ति ॥३५६॥

मालती

अयि किं गुणवति मालति जीवति भवतीं विना कथं मधुपः ।
अथ यदि जीवति जीवतु जीवितमपि तस्य जीविताभासः ॥३५७॥

अयि मालति सौरभसारविनि-
र्जितसंविकसत्कमलानिलये ।
मधुपानविधौ मधुपस्य पुन-
र्भुवने भवतीमहमाकलये ॥३५८॥

आमूलादुन्मूलय भूगलसारं प्रभञ्जनोशीरम् ।
दिशि दिशि विसरत्परिमलगन्धभरां मालतीं मा त्वम् ॥३५९॥

कति सन्ति लवङ्गलता ललिता
नवकोरकिता धरणीमुतले ।
गतिबन्धुरगन्धभृतस्तरवो
गुरवो निवसन्ति गिरौ मलये ॥३६०॥

किं मालति म्लायसि मां विहाय चुचुम्ब तुम्बीकुसुमं षडङ्घ्रिः ।
लोकश्चतुर्भिश्चरणैः पशुः स्यात् स षड्भिरत्यर्थपशुर्न किं स्यात् ॥३६१॥

विलससि मनोज्ञमनसा मालति मलिनेन गन्धवाहेन ।
कुसुमाकरेऽपि रमसे मुग्ध वैदग्ध्यमीदृश कस्या ॥३६२॥

मिथ्याराजस्तुति

इन्द्रो यमोऽसि वरुणोऽसि हुताशनोऽसि
ब्रह्मा हरो हरिरसीत्यसकृद यदुक्ति ।
भूपालमौलिमणिरञ्जितपादपीठ
सत्यानृतस्य फलमिन्धनमुद्वहामि ॥३६३॥

मुक्ता

अत्युच्चेनाऽविरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भिन्नेन सम्प्राप्त मौक्तिकेन निबन्धनम् ॥३६४॥

गुञ्जारञ्जितकबरीशबरीततिभिगरीयसी नारी ।
इह न हि मुक्तावणिज कोपि न मुक्तागुणज्ञोऽपि ॥३६५॥

जन्मस्थली वारणराजमूर्धा
महीपतीना मकुटे निवास ।
अनादर चेत कुरुतेऽनभिज्ञो
मुक्ताफलानामिह कोऽपराध ॥३६६॥

मुक्ताफल स्वामिभकुम्भसस्थ
पञ्चाननो मुञ्चतु मासलोभी ।
किरन्तु गुञ्जाभरणा किराता
कि तेन हीयेत महार्घता ते ॥३६७॥

रत्नाकरे परिहृता वसति किमन्य-
दङ्गीकृत कठिनवेधनदु खभार ।
वक्षोजकुम्भपरिरम्भणलोलुपेन
कि कि न तेन विहित बत मौक्तिकेन ॥३६८॥

हरिनखरविमुक्ता रक्तसिक्ता हि मुक्ता
परिणतबदराणीत्यादरेणोपगृहय ।
सपदि सरसि धौता प्रत्यभिज्ञाय मुक्ता
परिकिरति किराती हन्त कातार एव ॥३६९॥

हृदये कुरु सञ्चय गुणाना
यदि रे वाञ्छसि नासिके निवासम ।
इति मौक्तिक ते वदामि नून
गुणहीनोऽर्हति नासिके न वासम् ॥३७०॥

### मुरली

परिपीड्य करद्वयेन गाढं
परपुंसा परिचुम्बिताननापि ।
मुरली महनीयवंशजाता
मुहुराक्रन्दममन्दमातनोति ॥३७१॥

माधवस्य मुरली मुखलग्ना रागमावहतु किंतु वयस्ये ।
वंशजाऽहमिति मास्तु सगर्वा या बिभर्ति बहुशो विवराणि ॥३७२॥

### मूर्खः

यासां दृष्ट्वा नयनयुगलं वङ्गवाराङ्गनानां
देशत्यागः परमकृतिभिः कृष्णसारैरकारि ।
तासामेव स्तनयुगजिताः कुम्भिनः सन्ति मत्ताः
प्रायो मूर्खः परिभवविधौ नाभिमानं विधत्ते ॥३७३॥

### मूषिकः

धान्यागारप्रभृतिषु बिलं मूषिकासि प्रकुर्वन्
यस्मिन् जीवस्यहह भवने तत् करोष्येव भग्नम् ।
ये दृष्टास्तान् दशसि च नरान् स्वान् परान् वा शिशूंस्त्वं
खादस्येवं प्रथितदुरितस्तेन वध्योऽसि सर्वैः ॥३७४॥

### मृगतृष्णिका

जलभ्रमोत्पत्तिकृतो गुणौघान्
प्रकाशयन्त्यां मृगतृष्णिकायाम् ।
जलाशय भ्रान्तिरभून्ममैषा
प्रभूतसंतापकरी पिपासा ॥३७५॥

### मेघः

अयि मेघ भवानेव कृतघ्नो धरणीतले ।
पुष्णाति यस्त्वामत्यर्थं तमेव त्वं जिघांससि ॥३७६॥

तारतम्यमविज्ञाय गिरिणा योद्धुमिच्छसि ।
मेघ त्वमेव शौर्यस्य बलनेन विनंक्ष्यसि ॥३७७॥

### यूथी

यूथि यथोचितविधिना विधेयमातिथ्यमेतस्मिन् ।
मालतिकाप्राणेश. प्राघुणिकस्ते घुणाक्षरन्यायात् ॥३७८॥

## रङ्गम्

हे रङ्ग हेमतुलया तुलितोऽसि नित्यं
मान जहीहि किमु पश्यसि नो विशेषम् ।
स्वर्णं सरत्नघटित नृपशेखरेषु
त्व पाप पामरवधूचरणेषु लीन ॥३७९॥

## रत्नानि

अविभावित एव केवल खनिगर्भे मणिरेष जीर्यतु ।
न तु सीदतु मूल्यहानितो वणिगालोकनगोचरीकृत ॥३८०॥

एणाक्षीणा वरकुचतटे चन्दनामोदरम्ये
यस्यैकान्त विलसितमभून् मौक्तिकाना कलापं ।
सोऽप गुञ्जाफलशबलितो दैवयोगादिदानीं
भिल्लीकण्ठे मरकतमणे कामवस्था गतोऽसि ॥३८१॥

काचा काञ्चनभूषिता कति न वा मुष्णन्ति रत्नश्रिय
मौलौ वा कति नोद्वहन्त्यपधियस्तानव रत्नभ्रमात ।
अक्ष्णा ये पुनरुन्मृजन्ति तिमिर यैर्नाम रत्नाकर
सिन्धुस्ते पृथगव हन्त मणयस्तेष्वप्यभिज्ञा पृथक् ॥३८२॥

धन्योऽय मणिरेकश्छिन्नो भिन्नश्च शाणनिर्घृष्ट ।
युक्तस्तेजोनिचयैर्धन्यो दु खर्ऽपि योऽधिकाभास ॥३८३॥

पयोधे सवस्व शिरसि धृतवान् य नृपगण
पणो यस्य क्षोणीचतुरुदधिसीमावधिरभूत ।
स एवाय दैवाच्च छबरवनितापाणिपतितो
मणिर्मेषग्रीवाद्विगुणगुणबद्धो विहरति ॥३८४॥

विरम रत्न मुधा तरलायसे
तव न कश्चिदिहास्ति परीक्षक ।
विधिवशेन परिच्युतमाकरात
त्वमपि काचमणीकृतमीश्वरं ॥३८५॥

समुद्रेणान्तस्यस्तदभुवि तरङ्गैरकरुणं
समुत्क्षिप्तोऽस्मीति त्वमिह परिताप त्यज मणे ।
अवश्य क्वापि त्वद्गुणपरिचयाकृष्टहृदयो
नरेन्द्रस्त्वा कुर्यान् निजमुकुटकोटिप्रणयिनम् ॥३८६॥

रामचन्द्रः

संग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं ।
सुग्रीवेण विवर्तितं हनुमता व्यालोलमालोकितम् ।
श्रीरामेण परन्तु पीनपुलकस्फूर्जत्कपोलश्रिया
सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥३८७॥

रोहितः

अगाधजलसञ्चारी न गर्वं याति रोहितः ।
अङ्गुष्ठोदकमात्रेण शफरी फर्फरायते ॥३८८॥

लज्जात्यागः

यः कुन्तपाणिरिह भूप इति प्रसिद्धो
भूखण्डमात्रविभवः परसेवकश्च ।
तस्यात्मजः सततमिच्छति राजशब्दं
व्रीडे जगज्जननि हन्त निराश्रयासि ॥३८९॥

लता

चित्रं कनकलताया पल्लव एवामृतं सूते ।
कुसुमसमुद्गमसमये नो जाने किं फलं भावि ॥३९०॥

माकन्दे मकरन्दशीधुमधुरे पुन्नागपूगे भ्रमद्-
भृङ्गीनादविनोदभाजि बकुले पुष्पोद्गमामोदिनि ।
अन्येष्वत्र महीरुहेषु परितः प्राप्तेषु काचिल् लता
बाला कण्टकितं तरुं शिव शिव स्वैरं समालिङ्गति ॥३९१॥

लवङ्गलता

अयि दुष्कृतकेन केन यस्से हलिकद्वारि लवङ्गि पुष्पितासि ।
स्तबकास्तव पांसुभिः परीताः परितः प्राङ्गणसीम्नि यल् लुठन्ति ॥३९२॥

वनमार्जालः

वनमार्जालबीजन्तु देवभोगाय कल्पते ।
खरस्य वृषणं स्थूलं कस्मै वा किं प्रयोजनम् ॥३९३॥

वनवह्निः

सत्यप्येऽपि धरातले हुतभुजश्चस्थलीषु भिल्लीवधू-
पाणिश्रेणिपुराणशूर्पपवनप्रस्फालविस्तारिताः ।
ते सर्वे गजकर्णतालयुगलीवात्याविलत्याहत-
ज्वालाटङ्कविटङ्ककपटनवलद्प्राया न दावानलः ॥३९४॥

वराटक

तुलामारोहयेद्धेम्ना सह काणवराटिकाम् ।
वर्णनिर्णयवेलाया नारोहो निकषस्थले ॥ ॥३९५॥

वराटक त्व वरवर्णिनीना
वर्णान्तरोत्कर्षगुणस्य पुष्टिम् ।
कर्तुं समर्थो न तथा तुलाया
सुवर्णसाम्य भजसे न लज्जाम् ॥३९६॥

वराह

सर्वलोकपरितोषकारिणि स्वर्धुनीविमलवारिणि स्थिते ।
पूतिगन्धवति पल्वलोदके सूकर सुखमतीव मन्यते ॥३९७॥

वलय

गुणानामज्ञानादनुभवतु तावत् प्रतिपद
मुहुर्वह्निच्छेदव्यतिकरमसौ स्वर्णवलय ।
अपि ज्ञाते तत्त्वे तव गुणसमुद्रस्य पुरत
सम गुञ्जापुञ्जैस्तुलनमतिलज्जाकरमिदम् ॥३९८॥

वश

छिन्न मुनिशितै शस्त्रैर्विद्धश्च नव सप्तधा ।
तथापि हि सुवशेन विरस नापजल्पितम ॥३९९॥

वसन्त.

एक द्विज च स्पृहणीयवाच
मत्तद्विरेफ च मधु पुपोष ।
सतो गुणानप्यसतोऽपि दोषान्
जात्या विहीनो न विवेक्तुमीष्टे ॥४००॥

जीर्ण पर्णसमूह फलमपि गलित निदाघदाहेन ।
माधव तव करुणात पुनरपि तरुणायते चूत ॥४०१॥

श्रीमन् वसन्त भवदभ्युदये न वृक्षा
के नाम पुष्पफलपल्लवशालिन स्यु ।
अस्माकमल्पतपसा बदरीतरूणा
भ्रष्ट फल चिरशिखापटल प्रलूनम् ॥४०२॥

वायुः

अहह चण्डसमीरण दारुणं
किमिदमाचरितं चरितं त्वया ।
यदिह चातकचञ्चुपुटोदरे
पतति वारि तदेव निवारितम् ॥४०३॥

प्राथमिकी घनवृष्टिः प्राप्ता शिखिनो निदाघतप्तस्य ।
आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥४०४॥

राजीविनीविपिनसौरभसारगन्धो
योऽभूद् वसन्तदिवसेषु जनैकबन्धुः ।
रथ्यारजांसि विनुदन् निरुजन् नगेन्द्रा-
नुन्मत्तवद् भ्रमति पश्यसि सोऽद्य वायुः ॥४०५॥

वायुरेव महाभूतं वदन्तु निखिला जनाः ।
आयुरेवैष भूतानामिति मन्यामहे वयम् ॥४०६॥

भग्ना नाविकधोरणी निपतिता मध्ये जलं क्षेपणी
पन्थाः पर्वतदुर्गमो घनघनच्छन्नश्च तारापथः ।
भो भो मारुत दुस्तरो जलनिधिः शीर्णा च नौरद्य न-
स्तां निर्मज्जय वा तटं गमय वा हस्ते तवास्ते द्वयम् ॥४०७॥

वारिदः

अकूपाराद् वारि प्रचुरतरमादाय जलदः
स दानाध्यक्षोऽपि प्रकिरति जलं नाद्भुतमिदम् ।
स मेघो धन्यो यत् परिकिरति मुक्ताफलतया
यदीयासौ कीर्तिर्नटति नृपनारीकुचतटे ॥४०८॥

अन्ये ते विहगाः पयोद परितो धावन्ति तृष्णातुरा
वापीकूपतटाकसागरसरित्तोयेषु बद्धादराः ।
चित्रं पश्य य एष चातकशिशुः शुष्कोष्ठकण्ठोऽपि सन्
नान्यं पश्यति नोपसर्पति न च प्रस्तौति नोद्गायति ॥४०९॥

आश्रयः कियतामेव तरुः सन्मार्गमाश्रितः ।
पायोद सिच्यतां काले नोपेक्ष्यो दूरभावतः ॥४१०॥

आसक्ताः प्रतिकोटरं विषधराः भानोः करा मूर्धनि
ज्वालामालकरालदावदहनः प्रत्यङ्गमालिङ्गति ।
सर्वानन्दनचारुचन्दनतरोरेतस्य जीवातवे
रे जीमूत विमुञ्च वारि बहुशो युष्मद्यशो जृम्भताम् ॥४११॥

अस्या प्रावृषि चातकैर्जलकणा लब्धा न चेत् किं ततो
भाविप्रावृषि वास्यते द्विगुणमित्यभ्र त्वया मन्यते ।
एतेऽद्यैव लयं व्रजन्ति पृथुकैरेतत्कुलीनोऽपि चे-
देकः प्राणिति तावदेतदलमित्यत्रैव न संशय ॥४१२॥

आपो विमुक्ता क्वचिदाप एव
क्वचिन् न किंचिद् गरलं क्वचिच् च ।
यस्मिन् विमुक्ता प्रभवन्ति मुक्ता
पयोद तस्मिन् विमुख कुतस्त्वम् ॥४१३॥

आसन् कणानि यावन्ति चातकास्राणि तेऽम्बुद ।
तावन्तोऽपि त्वयोदार न मुक्ता जलबिन्दव ॥४१४॥

कासारेषु सरित्सु सिन्धुषु तथा नीचेषु नीरग्रह
धिक् तत्रापि शिरोनति किमपर हेयं भवेत मानिनाम् ।
इत्यालोच्य विमुच्य चातकयुवा तेषु स्पृहामादरा–
दुद्ग्रीवस्तव वारिवाह कुरुते धाराधरालोकनम् ॥४१५॥

किसलयानि कुत कुसुमानि वा
क्व च फलानि तथा नववीरुधाम् ।
अयमकारणकारुणिको न चेद
वितरतीह पयांसि पयोधर ॥४१६॥

गर्जन्नम्बु ददाति तच्च च कणिकारूपेण यत्र क्वचित
कालापेक्षतया प्रदानसमये नैल्यं विधत्ते मुखे ।
पश्चात् पाण्डुरतामुपैति लघुतामभ्येति भूयस्तरां
वीर श्रीप्रभुरत्नशेखरमणे दाता कियान् वारिद ॥४१७॥

गर्जतापि जलदेन विकीर्णा–
श्चातकैर्न गृहिरे जलरेखा. ।
वाबुराश्रितजना परुषोक्ती-
रप्यनन्यगतिका हि सहन्ते ॥४१८॥

गर्जसि नो घन मुञ्चसि तोयं चातकपक्षी व्याकुलितोऽयम ।
दैववशाद् यदि पश्चिमवात क्व त्वं क्वाय क्व च जलपात ॥४१९॥

ग्रीष्मोष्मा दलितो वनं विकसित धाराभिषिक्ता धरा
दावाग्नि शमितो हरित्सु रसितैरानर्तिता केकिन ।
प्राप्योच्चै पदमम्बुदेन विहित यद वै त्रिलोकीहित
तत्कीर्ति परिवर्तितामिह शरन्मेघान् वदन्ति भ्रमात् ॥४२०॥

जलधर भवतश्चरितं किमिदं पूर्णोऽपि पूरयसि ।
चिरयाचकसारङ्गे परिमिततृष्णे न शीकरं किरसि ॥४२१॥

ज्ञाता त्वन्मृदुशब्दता सुविदितं मित्रानुकूल्यं च ते
संत्राताः शबराश्रयाश्च बहवः प्राबल्यकाले तव ।
त्वत्सम्पत्तिधनं दिनं हि सुदिनं पाथोद किं ब्रूमहे
सौजन्यं प्रकटीकृतं हि भवतो हंसैर्मृणालाशनैः ॥४२२॥

तवैव प्रावीण्यं जलद जगदानन्दकरणं
यदम्भःपालीराहरसि खलसत्त्वाज् जलनिधेः ।
निसर्गात् क्षारास्ता नयसि च कथंचिन् मधुरता-
मथासारैस्तासां युगपदुपकर्तासि जगतः ॥४२३॥

ते ते चातकपोतका वितृषिता दावाग्निमग्नं वनं
संनिर्वापितमुष्णतापितमहो निर्वापिता सर्वतः ।
कासाराः परिपूरिताः पृथुपयोधाराभिरम्भोधर
त्वय्येवायमहो महोर्जितमहादानावदानक्रमः ॥४२४॥

त्यक्ता नद्यः कमलसरसी राजहंसावतंसा
पुण्याश्चेतो हिमगिरिभुवस्त्वत्कृते येन मुक्ताः ।
सम्प्राप्तेऽस्मिन् जलद वहनोच्चण्डदाहे निदाघे
पर्जन्य स्वीकुरु तमधुना चातकं पातकं वा ॥४२५॥

त्वं प्राप्नोषि महोन्नतिं क्षितिभृतां कृत्वा पदं मस्तके
सर्वस्वामुपजीवतीति मुदितस्त्वद्दत्तदृक् चातकः ।
नान्यानेष जलाशयान् मृगयते नापेक्षते नेक्षते
काले तं समुपेक्षते यदि भवान् किं नाम कुर्यादसौ ॥४२६॥

वर्षितोऽसि ततस्ततः पृथिव्या-
मयि जीमूत जनस्य जीवने च ।
विषयादपि गच्छतः किमेतान्
ध्वनिभिर्भीषयसीह राजहंसान् ॥४२७॥

धाराधर धरा वारिधाराभिरभिपूरिता ।
खगत्रोटीपुटद्रोणीपूरणे किं नु ते श्रमः ॥४२८॥

धाराधर विवेकात्मन् मुधा वर्षसि वारिधौ ।
चिरश्रितं कणातृप्तं चातकं किं न लोकसे ॥४२९॥

नदेभ्योऽपि ह्रदेभ्योऽपि पिबन्त्यन्ये सदा पयः ।
चातकस्य तु जीमूत भवानेवावलम्बनम् ॥४३०॥

नाधौ स्कन्धनतिः सरस्सु न मनो वापीषु नापीहित
कर्णोऽप्यर्णवसकथा न च कृता नाद्यापि नद्या मनः ।
सारङ्गेण समुत्तरङ्गरसनादण्डेन चण्डातप-
क्लान्तेनापि निरन्तर जलद हे त्वय्येव दत्त मन ॥४३१॥

नायाति चैव भवदम्बुकणाभिलापात
सारङ्गडिम्भकवरोऽम्बुधरान्तिक ते ।
किन्तु त्वदीयघनतासरसत्वलौल्यात
नो येन न सन्ति कति सारसवत्सरासि ॥४३२॥

निष्पद्म शिशिरेण धीवरगणैर्निर्मत्स्यनिष्कूर्मक
व्याधैर्निर्विहग निरम्बु रविणा निर्नालक दन्तिभि ।
निःशालूरमकारि सूकरगणैर्नामिक्शेष सरो
हे पाथोद परोपकारक पयोदानेन तत पूरय ॥४३३॥

नीर दूर तदपि विरस जङ्गमा नो लताद्या
तस्मिन दातर्यपि जलनिधौ को लभेताम्बुबिन्दुम ।
दानाध्यक्षे त्वयि जलधर क्वापि कुत्रापि शैला
शालावन्तोऽमृतनिभजलैस्तर्पिता सर्वे एते ॥४३४॥

नैवालवालवलय भरित द्रुमाणा
नार्द्रीकृतापि वन चातकपोतचञ्चु ।
दावानलाकुलतह शमितो न शीघ्र
भाराय वारिधर वारिपद तवाभूत ॥४३५॥

पपात पाथकणिका न भूमौ
समाप शान्ति ककुभा न ताप ।
दृष्टयैव जीवातुरय तडित्वान
कृषीवलाना मुदमुद्ववाम ॥४३६॥

पयोद हे वारि ददासि वा न वा
त्वदेकचित्त पुनरेष चातकः ।
वर महत्या म्रियते पिपासया
तथापि नान्यस्य करोत्युपासनाम ॥४३७॥

पानीयमानीय परिश्रमेण
पायोद पाथोनिधिमध्यतस्त्वम ।
कल्पद्रुमे सीदति साभिलाष
महोदरे मुञ्चसि किं निमित्तम् ॥४३८॥

प्रसीदतु पयोद ते हृदयमार्थिते चातके
यदस्य तदिमे गुणाः पुनरनन्यसाधारणाः ।
न नीचजनयाचनं न शरणान्तरालोचनं
न गौरवविमोचनं न निजदुर्दशासूचनम् ॥४३९॥

प्रावृषि शैलश्रेणीनितम्बमुज्झन् दिगन्तरं भ्रमसि ।
चपलान्तर घन किं तव वचनीयं पवनवश्योऽसि ॥४४०॥

भो भो वारिद वारिणा मम मुखं सम्पूरय प्रेमवान्
दाता त्वं जगदेकरक्षणपरो जानासि मामप्यलम् ।
त्वामेकं शरणागतं नदनदीकूपेषु मुक्तस्पृहं
दीनं चातकबालकं निजगृहं त्यक्त्वान्तराले स्थितम् ॥४४१॥

मुञ्च मुञ्च सलिलं दयानिधे
नास्ति नास्ति समयो विलम्बने ।
अद्य चातककुले मृते पुन-
र्वारि वारिधर किं करिष्यसि ॥४४२॥

मुञ्चस्यम्भः सममनुपमं क्षत्रगर्भे स्थले वा
साम्यं सम्यग् जलधर गतिश्चन्दने शीतहेतोः ।
न श्लाघ्यं तत् तदपि कृतिनां नेदमन्तर्भृतं स-
द्योनिः काले भवति भवतो यद् विषं जीवताया. ॥४४३॥

यत् पल्लवः समभवत् कुसुमं यदासीत्
तत् सर्वमस्य भवतः पयसः प्रसादः ।
यद् भूरुहे फलविधौ न ददासि वारि
प्राचीनमम्बुद यशो मलिनीकरोषि ॥४४४॥

यद्यपि सन्ति बहूनि सरांसि
स्वादुसुशीतलसुरभिपयांसि ।
चातकपोतः तदपि च तानि
त्यक्त्वा याचति जलदजलानि ॥४४५॥

यावत् तिष्ठति चातकोऽयमसुभिः कण्ठस्थलस्थायिभिः
तावद् देहि पयः पयोद फलतु त्वद्वारिकल्पद्रुमः ।
नो चेदस्य तृषार्तिपीडिततनोः प्राणैः प्रयाणे कृते
कस्मै दास्यसि को ग्रहीष्यति पुनः पापं तु ते स्यास्यति ॥४४६॥

ये तपनकिरणशुष्कास्तदनु च दावानलेन संदग्धाः ।
जलधर शिखिनोऽप्येते त्वज्जलसेकेन जीवन्ति ॥४४७॥

रे धाराधर धीर नीरनिकरैरेषा रसा नीरसा
शेषा पूरकरोत्करैरतिखरैरापूरि भूरि त्वया ।
एकान्तेन भवन्तमम्बरगत स्वान्तेन सचिन्तय-
न्नाश्चर्यं परिपीडितोऽभिरमते यच् चातकस्तृष्णया ॥४४८॥

वातैर्विधूनय विभीषय भीमनादैं
सचूर्णय त्वमथवा करकाभिघातैं ।
त्वद्वारिबिन्दुपरिपोषितजीवितस्य
नान्या गतिर्भवति वारिद चातकस्य ॥४४९॥

सर्वत्र स्रवतोऽस्य किंचिदुदक दिष्ट्या मुहूर्तं क्वचित्
छुक्तीनामुदरेषु मौक्तिकमभूत काले कदाचित किल ।
अद्यत्वे च तथा करोतु पटुता यद्यस्ति सा दूरत
शुक्तैरेव तु गर्जितैर्व्यथयसि श्रोत्राणि धाराधर ॥४५०॥

सर्वं वन तृणाल्या पिहित पीता सितासुरविताराः ।
प्रध्वस्ता पन्थानो मलिनेनोदगम्य मेघेन ॥४५१॥

सेवतव्यो यदि माधवस्तरय पायोद पायोलवं
अम्याज परिपिञ्च किं चिरयसे काल परिक्रामति ।
मूले मुक्तरसे दले विगलिते शुष्के तथा वल्कले
कस्मै दास्यसि को ग्रहीष्यति परीतापात कथ स्यास्यति ॥४५२॥

स्निग्धाभूवनी वनी मरकतश्यामा च कल्लोलिनी
नानावर्तविहारिणी जलधर स्वच्छाम्बुपूर सर ।
सर्वं साधु तवोदये किमिह तद दुर्नीतिमालोकये
यद भेका मुखरीभवन्ति विरलीभूताश्च पुंस्कोकिला ॥४५३॥

हर्यं वर्यं विघत्से विरसमयतृषा शुष्यता चातकाना
भूमेस्तापोपशान्ति वितरसि तरसा लोकशोक धुनोषि ।
अम्भोदैतत् तवैक परममनुचित यत् पिधत्से सुधांशु
भासामीश क्वचि वा बुधमपि वहसि प्रेम खद्योतवर्गे ॥४५४॥

पण्डित

हसो न भाति बलिभोजनवृन्दमध्ये
गोमायुमण्डलगतो न विभाति सिंह ।
जात्यो न भाति तुरग खरयूथमध्ये
विद्वान् न भाति पुरुषश्च निरक्षरेषु ॥४५५॥

वृकः

साधुं समीक्ष्य मृगमस्य जिघांसया त्व-
मीहामृगातमकुलमिच्छसि नेतुमेनम् ।
एवं भविष्यति यदि प्रबलस्त्वदग्रे
जन्तुस्तदा क्व नु निनीषसि किं च कुर्याः ॥४५६॥

वृक्षः

अध्वन्यध्वनि तरवः पथि पथि पथिकैरुपास्यते छाया ।
विरलः स कोऽपि विटपी यमध्वगो गृहगतः स्मरति ॥४५७॥

आयान्ति त्वरिता गभीरसरितां कूलेषु भूमीरुहां
मूले यत् पथिका निदाघमथिताः कृत्यं तदेषां परम् ।
सत्पुष्पैरधिवासनं निविडया यच् छायया पालनं
यन् मन्दैरुपवीजनं च पवनैः कृत्यं तदुर्वीरुहाम् ॥४५८॥

आसीच् च वारिजनितः स्वयमङ्कुरो यो
जातस्ततो द्विदलितो विटपाश्रयश्च ।
काले यदैव कृतिभिः कुसुमोपगूढः
सोऽयं फली यदि तदा सफलः श्रमस्ते ॥४५९॥

इयं बाला वल्ली मृदुकिसलयं तापविलयं
घनच्छायं सालं नवमतिविशालं परिगता ।
परंत्वस्याप्यन्तर्गरलवभस्मीकृतवनं
भुजङ्गं प्रोत्तुङ्गं कथमिव वराकी कलयतु ॥४६०॥

एकस्त्वं मरुभूरुहेन्द्र विततैः शाखाशतैरञ्चितैः
पुष्यत्पुष्पलतान्वितैरमुदितैर्जीयाः सहस्रं समाः ।
अश्रान्तं श्रमलग्नपान्थजनतासर्वार्थनिर्वाहणं
कस्त्वां सात्त्विकमन्तरेण भुवने निर्मातु धर्माशयः ॥४६१॥

कश्चित् नवं पल्लवमाददाति
कश्चित् प्रसूनानि फलानि कश्चित् ।
परं करालेऽस्य निदाघकाले
मूले न दाता सलिलस्य कश्चित् ॥४६२॥

छायाभिः प्रथमं ततश्च कुसुमैः पश्चात् फलैः स्वादुभिः
प्रीणात्येव तरुर्महानिति पथि श्रान्तैः समागम्यते ।
को जानाति यदत्र कोटरपुटे प्रत्यग्रहालाहल-
ज्वालाजालकरालभालफलकः क्रूरः फणी वर्तते ॥४६३॥

छायामन्यस्य कुर्वन्ति स्वय तिष्ठन्ति चातपे ।
फलन्ति च परार्थेषु नात्महेतोर्महाद्रुमा ॥४६४॥

तीव्रोऽयं नितरा निदाघसमय प्रोद्यत्प्रचण्डद्युति-
र्मार्गो भारव एष तत्र पथिका सञ्चारिण कोटिश ।
तेषां कश्चिदिहाश्रयस्तरुवरो दैवेन सम्पादित
सोऽप्येक सुकृती करोतु कियतां सन्तापनिर्वापणम ॥४६५॥

धत्से मूर्धनि दु सहा दिनमणेरुद्दामधामच्छटा-
श्छायाभि पथिकान निदाघमथितान् प्रीणासि पुष्पै फलै ।
धैर्यं मुञ्चसि नैव नैव भवत शाखा सुविस्फारिता-
स्तेनाशासु च तन्यते तव यश स्तोम समज्जृम्भित ॥४६६॥

वृश्चिक

विषभारसहस्रेण गर्वं नायाति वासुकि ।
वृश्चिको बिन्दुमात्रेणाप्यूर्ध्वं वहति कण्टकम् ॥४६७॥

वृषभ

आलम्बो गरु सुपुष्टो वामेतरचरणभेद उपदेश ।
ख्यातिर्गुणधवल इति भ्रमसि सुख वृषभ रथ्यासु ॥४६८॥

व्यर्थनामानि

आकाशश्चाम्बराख्यो हरिरिति गहन दर्दुरस्याभिधान
काकस्यापि द्विजत्व विषमफणिपतेर्नाम भोगी भुजङ्ग ।
क्षुद्रास्मा शर्करेति द्विरदमदजल दानमर्थेन शून्य
केचित् नामानि चैव ददति तनुभृत सन्ति साडम्बराणि ॥५६९॥

व्याध

सर्वोद्वेगकर मृगादनममु सत्यज्य हा धिक् त्वया
लोकस्यानपकारिण गिरिनदीतीराटवीनिर्वृतम ।
अश्नन्त तृणमेणशावमदय व्याध घ्नतामु वृथा
देवो दुर्बलघातकोऽयमिति मा गाथा यथार्थीकृता ॥४७०॥

शङ्ख

क्व वाम्भोधौ जन्म क्व च वपुरिद कुन्दधवल
क्व चावासस्थान कृतमहह विष्णो करतलम् ।
क्व नोचानामास्ये परिणतिरिय चुम्बनविधा-
वितीवाय शङ्ख करुणकरुण रोदिति मुहु ॥४७१॥

जलनिधौ जननं धवलं वपुः मुररिपोरपि पाणितले स्थितिः ।
इति समस्तगुणान्वित शङ्ख भोः कुटिलता हृदये न निवारिता ॥४७२॥

ध्वनिरतिमधुरः शुचित्वमुच्चै-
र्जनिरपि शङ्ख नदीनतस्तवाभूत् ।
अवगतमखिलं बहिः सितत्वं
कुटिलतरं पुनरन्तरं न विद्मः ॥४७३॥

शम्बूकः

शम्बूकः सिकतिलभूतलानुकायी
संविन्देच् चिरमुरसा पदानि गच्छन् ।
द्वित्राणि क्षुभितमहार्णवस्तिमीन्द्रो
द्वे कूले चरति मुदेति लोकवार्ता ॥४७४॥

शरः

कोटिद्वयस्य लाभेऽपि नतं सद्वंशजं धनुः ।
असद्वंश्यः शरः स्तब्धो लक्षलाभाभिकांक्षया ॥४७५॥

शशः

आत्मीयपक्षपरपक्षविनाशधुर्यं
स्वीयान् परानपि शिशून् शश हन्त हंसि ।
पापोऽसि पापमत एव तवावलोकाद्
भिन्दन्ति तावकशिरो मनुजाश्च दण्डैः ॥४७६॥

शारिका

लोकैरतीव गण्यं ते नैपुण्यं भुवि शारिके ।
यः पाठयति यद् वाक्यं तद्वदेव ब्रवीषि तत् ॥४७७॥

शारिका मधुरालापा न रञ्जयति कं जनम् ।
वाक्यैर्नैवाधिको लाभः शरीरे नैल्यमेव हि ॥४७८॥

शावकः

न भ्रूणां स्फुरणं न चञ्चुचलनं नो चूलिकाकम्पनं
न ग्रीवाचलनं मनागपि न यत् पक्षद्वयोत्क्षेपणम् ।
नासाप्रेक्षणमेकपाददमनं कष्टैकनिष्ठं परं
यावत् तिष्ठति हीनमौनवदनस्तावद् बकस्तापसः ॥४७९॥

## शाल्मलि

उच्चैस्त्वाद् वयसा च शाल्मलितरो नि सार मा गा मद
माकन्दस्य नवस्य न्यास्य विपिने जानासि नून गुणान ।
एतस्यैव वने वने परभृता वादान्यक कानने
माध्वीकप्लवदूमिका मधुलिहो गायन्ति गाढ यश ॥४८०॥

उत्तुङ्गमम्भोजसमानपुष्प
बृहत्फल शाल्मलिवृक्षमेव ।
दूरान् समालोक्य विपाककाले
शुका समाश्रित्य गता निराशा ॥४८१॥

दूरे मार्गान् निवससि पुन कण्टकैरावृतोऽसि
च्छायाशून्य फलमपि च ते वानरैरप्यभक्ष्यम ।
निर्गन्धस्त्व मधुपरहित शाल्मले सारशून्य
सेवास्माक भवति विफला तिष्ठ नि श्वस्य याम ॥४८२॥

## शालिश्यामाकौ

एकभूरुहयोरेकदलयोरेवकाण्डयो ।
शालिश्यामाकयोर्भेद फलेन परिचीयते ॥४८३॥

## शिव

इय तावल लीला यदधिरुह्हे वृद्धवृषभो
यदुन्नेहे रुण्ड यदिह चितिभस्मापि लिलिपे ।
अय को व्यापारो यदतिलकि भाले हुतवहो
मदग्रीवि व्यालो यदकवलि हालाहलमपि ॥४८४॥

उरसि फणिपति शिखी ललाटे
शिरसि विधु सुरवाहिनी जटायाम ।
प्रियसखि कथयामि कि रहस्य
पुरमथनस्य रहोऽपि ससदेव ॥४८५॥

भस्मनि स्मररिपोरनुरागे हीयते न घनसारपराग ।
भूषण यदि फणी न मणीना काचिदप्यरचि निर्न च हेम्न ॥४८६॥

## शुनक

उच्छिष्टपत्रनिचये निजजातिवर्गै-
र्युद्ध कुरुष्व कलहप्रिय सारमेय ।
पूज्य विलोक्य नरदेवगृहे करीन्द्र
मा रोदन कुरु फल न हि तेऽस्ति किंचित् ॥४८७॥

द्वारं न प्रजहाति जातु नियतं जागर्ति रात्रौरपि
स्वल्पेनापि मुदं प्रयाति किमुन श्वा श्वैव तावानपि ।
सम्पाद्यो महता धनेन सततं भोज्यस्तु सान्त्वैरिति
त्यक्त्वा मत्तगजं पदेऽस्य महति स्याप्यः किमेतावता ॥४८८॥

पञ्चास्यस्य पराभवाय भवको मांसेन गोर्भूयसा
दध्यन्नैरपि पायसैः प्रतिदिनं संवर्धितोऽञ्जेन यः ।
सोऽयं सिंहरवाद् गुहान्तरगताद् भीत्याकुलः संभ्रमात्
हस्ताशावलयं गतो हतविधे लाभः परं गोवधः ॥४८९॥

श्वन् प्राप्तसिंह इति सिंहपदं दधासि
लज्जां विहाय महतां परिहासपात्रम् ।
नैच्यं क्व याति तव सा गुरुता कथं नु
कण्ठीरवस्य धृतिरीश्वरता च लभ्या ॥४९०॥

शेषः

युक्तोऽसि भुवनभारे मा वक्रां वितनु कन्धरां शेष ।
त्वय्येकस्मिन् दुःखिनि सुखितानि भवन्ति भुवनानि ॥४९१॥

सङ्गः

छिद्रिणां निकटे वासः कर्तव्यो नैव धीमता ।
वारिहारि घटीपात्रं ताड्यते तत्र झल्लरी ॥४९२॥

मलयाचलसंसर्गान् न वेणुश्चन्दनायते
अन्तःसारविहीनानां रसः केनोपजायते ॥४९३॥

सत्सङ्गो यदि लभ्यः पुष्पफलैः पोषणीय एवासौ ।
पथि पथि सुलभा वृक्षा न लभ्यते कुत्रचिदपि कल्पतरुः ॥४९४॥

समुद्रः

मन्थार्थं कियतीरुवाह महतीर्मन्थाद्रिमर्मव्यथा
मर्यादामतिवर्तते न कतिभिर्वात्याभिरत्याकुलः ।
कुक्षौ क्षोणिभृतो बिभर्ति पयसा पुष्णाति लोकत्रयं
तेनैवाम्बुनिधेर्महत्त्वमधिकं वर्वर्ति सर्वोपरि ॥४९५॥

आस्तां तावदहो समुद्रमहिमा दूरे तु कर्मप्रिय-
स्तीरे यस्य पिपासयैव मरणं प्राप्नोति शीघ्रं जनः ।
तस्मादम्बुनिधेर्वरं लघुमरुः कूपोऽथवा वापिका
यत्र स्वीयकरद्वयेन सलिलं पेपीयते स्वेच्छया ॥४९६॥

जलधे श्रयन्ति बहवो बलाहका
दिश जीवनानि सहसा यथोचितम् ।
कलशोद्भवेन करपल्लवोदरे
चुलुकीकृतस्त्वमसि केन याचितः ॥४९७॥

तरङ्गमालिकाभील धिक् ते सागर गर्जितम् ।
यस्य तीरे तृषाक्रान्ता. पान्था पृच्छन्ति वापिकाम् ॥४९८॥

निधान रत्नानां निधिरमृतलक्ष्मीन्दुपयसा-
मितः प्रीत. शेते हरिरिति भजामो जलनिधिम् ।
कथं वा जानीमः शठकमठपाठीनमकर-
ग्रहग्राहात्युग्रक्रकचविकचावान्तरभयम् ॥४९९॥

निष्पीतपीनतिमिराणि मनोहराणि
रत्नानि सन्ति न कियन्ति तवान्तिकेषु ।
एतस्य कौस्तुभमणेर्व्रजत॰ परन्तु
पाथोनिधे स्मरणमान्तरमावहेथा ॥५००॥

पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्व शरण्यो गिरीणा
सुत्रामत्रासभाजा त्रिदशविटपिना जन्मभूमिस्त्वमेव ।
गाम्भीर्यं तद् च तादृक् त्वयि सलिलनिधे किन्तु विज्ञाप्यमेतत्र
सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टय काक्षणीया ॥५०१॥

पीयूषेण कृतार्थिता दिविषदो लक्ष्म्या हरि. प्रीणित
चन्द्रार्धेन विभूषितः पशुपतिः कल्पद्रुमैर्वासव ।
आत्मानं परिमथ्नताप्युदधिना किं किं न तेषा कृत
तस्यागस्त्यमुनिप्रपीतपयसो नोच्चै॰ कृतंकाङ्गुलि. ॥५०२॥

पीयूषेण सुरा श्रिया मुररिपुर्मर्यादया मेदिनी
शक्र कल्परुहैः शशाङ्ककलया श्रीशङ्करस्तोषित॰ ।
मैनाकादिनगा निजोदरगता यत्नेन सरक्षित।
मच्छून्यीकरणे घटोद्भवमुनिः केनापि नो वारित ॥५०३॥

महप श्रीरिति शार्ङ्गभृत् त्रिदशराट् चिन्तामणिर्मह्यमि-
त्यब्जो महयमितीश्वर सुरगणो मह्य सुधा चास्त्विति ।
सर्वे सन्त्यपहर्तुमेव जलधे॰ सर्वस्वमेन रथा
हन्ताधामति तापसे न गदितु कोऽप्यस्ति तन मास्त्विति ॥५०४॥

मा कुरु गुरुतागर्वं लघुरम्यो नास्ति सागर त्वत्त ।
जलसग्रहमन्यस्मात् त्वयि सति कुर्वन्ति पोतस्या॰ ॥५०५॥

लक्ष्म्या श्रीपुरुषोत्तमो हिमरुचा गौरीप्रियोऽश्वैर्हरि-
देवेन्द्रोऽपि विमानवारणहयस्त्रीरत्नकल्पद्रुमैः ।
पीयूषैरमितैस्त्वया दिविषदश्चान्ये कृतार्थीकृताः
श्रीमन् वारिनिधे त्वदीयमहिमा नूनं न वाग्गोचरः ॥५०६॥

शेते यत्र हरिर्वसन्ति गिरयो मज्जन्ति दिग्दन्तिनो
मत्स्याः सन्ति तिमिङ्गिलप्रभृतयो गर्भं दधात्यम्बुदः ।
पर्यायेण खरांशुशीतकिरणावुन्मज्जनो मज्जतः
पान्थास्तत्र न संपिबन्ति यदि ते किं दूषणं वारिधेः ॥५०७॥

हंहो वारिनिधे विधेः समुचितं येनासि रत्नाकरो
रत्नं चेदवमन्यसे वद विभो नैतत पदं विन्दसि ।
पश्यालङ्करणं पुरन्दरपुरे चिन्तामणिः कौस्तुभो
विष्णोर्वक्षसि मीनकेतनरिपोः शीर्षे कलानां निधिः ॥५०८॥

सरः

कासारवर्य कलिताम्बुरुहावतंस
मुक्तासमानजलबिन्दुतरङ्गरङ्ग ।
किं भूषणं तव बकैर्बहुभिः कुरावै-
र्हंसैर्विना कलरवैर्नरदेवपूज्यैः ॥५०९॥

छायाभिर्निबिडाभिराभिरभितः पुष्यत्प्रसूनोदरा-
दुन्मीलद्भिरनुत्तमैः परिमलैः स्निग्धैश्च मुग्धैर्दलैः ।
मन्दस्पन्दवता शिवेन मरुता संशोलितास्त्वेदिह
क्लान्ति पान्यजनास्त्यजन्ति सरसस्तीरेऽप्यलं मज्जनैः ॥५१०॥

भो भोः सरस्त्वदुदरान्तरवर्तितस्य
त्वत्पूर्णतातिपरितोषितचित्तवृत्तेः ।
त्वज्जीवनेन सह जीवनमस्य नश्येन्
मीनः क्व जीवति कमाश्रयतेऽतिदीनः ॥५११॥

सर्पः

जानामि नागेन्द्र तव प्रभावं
कण्ठे स्थितो गर्जसि शङ्करस्य ।
स्थानं प्रधानं न बलं प्रधानं
स्थानस्थितः कापुरुषोऽपि सिंहः ॥५१२॥

तावद् गर्जन्ति मण्डूकाः कूपमाश्रित्य निर्भयाः ।
यावत् करिकराकारः कृष्णसर्पो न दृश्यते ॥५१३॥

सुजनानामपि हृदयं पिशुनपरिष्वङ्गमलिनमिह भवति ।
पवनः परागवाही रथ्यासङ्गे रजस्वलो भवति ॥५१४॥

## सिंह.

अन्तर्बलान्यहममुष्य मृगाधिपस्य
वाचा निवेद्य कथमद्य लघूकरोमि ।
जानन्ति किन्तु करजक्षतकुम्भिकुम्भ-
निर्मुक्तमौक्तिकमयानि वनान्तराणि ॥५१५॥

अप्यकुर्वन् सटाटोपमगर्जन्नपि केसरी ।
भूभृतः कुरुते शोभां गर्जन्नपि न कुञ्जरः ॥५१६॥

उत्तुङ्गमत्तमातङ्गमस्तकन्यस्तलोचनः ।
आसन्नेऽपि न सारङ्गे करोत्याशां मृगाधिपः ॥५१७॥

उत्प्लुत्य यः शिखरिणं मदकुम्भिकुम्भ-
मुद्भिद्य सानुशतमायतमुल्ललङ्घे ।
पञ्चाननेन नियतया जरयाभिभूतः
सोऽयं करी विलति बृहति लोहिनाक्षः ॥५१८॥

एणाः संभ्रमेण त्यज गवय भयं सैरिभ स्वैरमास्व
क्षोभं मा गास्तरक्षो विहर गिरिभुवि स्वेच्छयैणाच्छभल्ल ।
पारीन्द्रः पारदृश्वा निखिलवनभुवः केवलं मोदतेऽसौ
मायत्कुम्भीन्द्रकुम्भस्थलविपुलतटीमुक्तमुक्ताकलापैः ॥५१९॥

काकः पक्षबलेन भूपतिगृहे ग्रासं यदि प्राप्तवान्
किं वा तस्य महत्त्वमस्य लघुता पञ्चाननस्यागता ।
येनाक्रम्य करीन्द्रगण्डयुगलं निर्भिद्य हेलालवात्
लब्ध्वा ग्रासवरं वराटकधिया मुक्तागणस्त्यज्यते ॥५२०॥

किं पुष्णासि मृगान् मृगादनकुलात् किं वा परं त्रायसे
त्वद्भाग्येन तथाप्यमी वनभुवि स्वैरं चरित्वा तृणम् ।
त्वां राजानमुपासितुं यदि किल श्रद्धा निबध्नन्ति ते
हे हर्यक्ष गुहागृहादपि विनिर्गन्तुं तवाद्य श्रमः ॥५२१॥

कुरङ्गीणां यूथं निभृतमिदमङ्गीकृतमयं
निरातङ्को यत् निर्दयहृदयभावोऽर्दयतु तत् ।
निवेद्यो वा कस्मिन्नयमविनयः केसरियुवा
हठात् मत्तेभानां पृषतिषु विधत्ते नखपदम् ॥५२२॥

कोलः केलिमलंकरोतु करिणः क्रीडन्तु कान्तासखाः
कासारे वनकासराः सरभसं मज्जन्त्विह स्वेच्छया ।
अभ्यस्यन्त्विभयोषितश्च हरिणा भूयोऽनुरूपां गतिं
कान्तारान्तरसञ्चरिष्णुरधुना पञ्चाननो वर्तते ॥५२३॥

चिरं शासित्वायं मृगपतिरशेषं मृगकुलं
जराजीर्णो यातः परिभवपदत्वं विधिवशात् ।
उदासीनस्तिष्ठेर्यदि तरुणकण्ठीरव गति-
स्तवाप्येवंरूपा किमु न भविता जम्बुकवृकैः ॥५२४॥

जातः स्तन्यं न जग्राह कण्ठीरवकिशोरकः ।
चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥५२५॥

जित्वानेकान्यरण्यान्यतिविषमलतागुल्मदुर्गाण्यदूरा-
दायान्तं मां विलज्जा भषकततिरियं बुक्कनैर्धिक्करोति ।
लज्जन्ते हन्तुमेनां मदकरटिघटाकुम्भनिर्भेदचण्ड-
क्रीडाधौरेयधारा मम खरनखराः किं करोमि क्व यामि ॥५२६॥

दिङ्नागाः प्रतिपेदिरे प्रथमतो जात्यैव जेतव्यतां
सम्भाव्यस्फुटविक्रमोऽथ वृषभो गौरेव गौरीपतेः ।
विक्रान्ते निकषं करोतु कतमं नाम त्रिलोकीतले
कण्ठेकालकुटुम्बिनीकरुणया सिक्तः स कण्ठीरवः ॥५२७॥

पारीन्द्रशावक न तावकरीतिरेषा
वेयान्तरैर्विहरसि स्वशृगालशावैः ।
कुम्भीन्द्रकुम्भदलनोत्पतनक्रमेच्छा
वंशोचितां न खलु रीतिमुरीकरोषि ॥५२८॥

प्रकटय सहजं मृगेन्द्र वीर्यं
ननु विपिने न तथा करोषि चेत् त्वम् ।
विदधति ननु जम्बुका वृकाश्च
स्ववशमिदं तव जीवनं वनं च ॥५२९॥

भिनत्ति भीमं करिराजकुम्भं
बिभर्ति वेगं पवनादतीव ।
करोति वासं गिरिगह्वरेषु
तथापि सिंहः पशुरेव नान्यः ॥५३०॥

यद्यपि च वयोयोगात् सिंहः पतितोऽतिदुस्तरे कूपे ।
तदपि च वाञ्छति सततं करिकुम्भविदारणं मनसि ॥५३१॥

यद्यपि रटति सरोष मृगपतिपुरतोऽपि मत्तगोमायु ।
तदपि न कुप्यति सिंहोऽप्यसदृशपुरुषेषु क कोप ॥५३२॥

यस्मिन् जीवति सिंहे वनमिदमासीद् दुरासद द्विरदै ।
घटयन्ते कटिसूत्र तस्य सटाभि शबरशिशव ॥५३३॥

यूना येन विभिन्नवारणघटाकुम्भोच्चलन्मौक्तिक
श्रेणीभि परिपूरितास्तटभुवो भूमीभृता कोटिश ।
तस्यैवाद्य निवाससीम्नि कलभा क्रीडन्ति नि साध्वस
पारीन्द्रस्य जरातुरस्य तदहो सन्नो जिगीषारस ॥५३४॥

वयोऽभिमानादवमानना चेद्
विधीयते फेरुजरत्तरेण ।
हेलाहतानेककरीन्द्रयूनो
हरीन्द्रसूनोर्नहि कापि हानि ॥५३५॥

वरनुन्नतलाङ्गूलात् सटाधूननभीषणात ।
सिंहात् पादप्रहारोऽपि न शृगालाधिरोहणम् ॥५३६॥

श्वान सन्त्यभितोऽपि दन्तमुकुलव्यावर्तनोत्पाटित-
स्वैरोत्तानितविड्वराहपृथुका किं तै स्थितैर्वा मृतै ।
वस्तव्य गिरिराजमौलिषु विहर्तव्य पुन स्वेच्छया
हन्तव्या करिणो मृगन्द्र इति च प्राप्तव्यमुच्चैर्यश ॥५३७॥

स्वैर सैरिभयूथपरिहृ सर शृङ्गगण विक्षोभित
तावन् न्यङ्कुकुल च हुङ्कृतिशतैर्विद्रावित द्वीपिभि ।
हेलाक्षिप्तपदे पराक्रमनिधावुज्जृम्भमाण हरौ
चित्र सब तथैव चित्रलिखितेवासीदरण्यस्थली ॥५३८॥

हेलाविदलितकरिकुल कण्ठीरव कीदृश प्रकोपोऽयम् ।
लोले बालशृगाले केवलकोलाहलाधारे ॥५३९॥

हे हयक्ष सहस्व सप्रति लघुर्गोमायुरग्रे सता
मत् साधारणवन्यजन्तुमनसा गुणारव सव्यथान् ।
नीचाना प्रकृतिर्भ्रमो मुखरता चात कथ खिद्यसे
शार्दूले द्विरदे मृगे शशकुले कस्ते विपक्षज्वर ॥५४०॥

सुवर्णम्

आदौ त्व निकषेण किं च तुलया वक्त्रेण वह्नेर्भवे
शुद्धात्मापि सुवर्ण खण्डनविधौ नातिस्त्वयि श्रीमति ।

कण्ठालिङ्गिनि कर्णचुम्बिनि कुचग्राहिण्यहो सुभ्रुवां
पाणिग्राहिणि मेखलास्पृशि सुखं लोकः कथं पश्यति ॥५४१॥

हेम्नः खेदो न दाहेन छेदेन कषणेन वा ।
तदेव हि परं दुःखं यद् गुञ्जासमतोलनम् ॥५४२॥

सूर्यः

अजस्रं लसत्पद्मिनीवृन्दसङ्गं
मधूनि प्रकामं पिबन्तं मिलिन्दम् ।
रविर्मोचयत्यब्जकारागृहेभ्यो
दयालुर्हि नो दुष्टवद् दोषदर्शी ॥५४३॥

करस्फोटोऽम्बरत्यागः तेजोहानिः सरागता ।
वारुणीसङ्गजावस्था भानुनाप्यनुभूयते ॥५४४॥

दूरं यान्तु निशाचराः शशिकराः क्लेशं लभन्तांतरा-
मुद्योतं कलयन्तु हन्त न चिरं खद्योतका द्योतले ।
ध्वान्तं ध्वंसमुपैतु हंसनिवहः पद्माकरे शाम्यतु
प्राचीपर्वतमौलिमण्डनमणिः सूर्यः समुज्जृम्भते ॥५४५॥

धिक् छ्रीतमोहृतिजगज्जनरञ्जनादि
सर्वं भविष्यति रवेरिव चन्द्रतोऽपि ।
किं त्वस्तगामिनि रवौ भविता न जाने
राजीवजीवनविधौ कतमः प्रकारः ॥५४६॥

पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ
व्रजतु वरुणागारद्वारं प्रभाभिरनादृतः ।
तदपि तरणिर्दत्त्वा पादं शिरस्सु महीभृतां
दलिततिमिरव्रातः प्रातः पुनः सक्रुदेष्यति ॥५४७॥

पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सार्य नैशं तमः
कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा ।
मध्याह्ने सरितां पयः प्रवितर्तरापीय दीप्तैः करैः
सायाह्ने रविरस्तमेति विवशः किं नानुशोच्यं भवेत् ॥५४८॥

हंसः

एकेन राजहंसेन या शोभा सरसो भवेत् ।
न सा बकसहस्रेण परितस्तीरवासिना ॥५४९॥

एषा पुष्करिणी मराल मलिनैश्छन्ना कुनीनीजनै-
र्यस्यामज्ञतया विधेरकरुणा चेद त्वमुमाकाङ्क्षसे ।
विस्रम्भो बकमण्डलेषु विनयो भेकेषु सद्बन्धिता
रात्यन्धेषु विधीयता कृपगता कोयष्टिकश्रेणिषु ।।५५०।।

कञ्चिदेव समय समागमात्
त्वा न विस्मरति शश्वदम्बुजम् ।
मानसे विहर हस मानमे
मा विमुञ्च पुनरस्य सौहृदम ।।५५१।।

काके कार्ष्ण्यमलौकिक धवलता हसे निसर्गस्थिता
गाम्भीर्ये महदन्तर वचसि यो भेद स किं कथ्यते ।
एतावत्सु विशेषणेष्वपि सखे यत्रेदमालोक्यते
के काका खलु के च हसशिशवो देशाय तस्मै नम ।।५५२।।

पीत येन पुरा पुरन्दरपुरे रम्भोरुकेलिस्खलन्-
मन्दाराङ्कुरकर्णपूरसुरभि स्वर्गापगाया पय ।
सोऽय भारववारि पामरवधूपादार्पणप्रोच्चलत-
पङ्कातङ्कितभेकभिन्नमघृणो हस समाशासते ।।५५३।।

बककोयष्टिभिर्जुष्टे पल्वले मानन कुत ।
मोदते हि मरालस्य सन्मानसविहारिण ।।५५४।।

यत्रापि कुत्रापि भवन्ति हसा
हसा महीमण्डलमण्डनानि ।
हानिस्तु तेषा हि सरोवराणा
येषा मरालै सह विप्रयोग ।।५५५।।

य वर्धिता कनकपङ्कजरेणुमध्ये
मन्दाकिनीविमलनीरतरङ्गमध्ये ।
ते साम्प्रत प्रतिदिन खलु राजहसा
शैवालजालजटिल जलमाश्रयन्ते ।।५५६।।

सानन्द बिसिनीदले विहरसे भुङ्क्षे मृणालीलता
शश्वन् निन्दसि राजहस तदपि त्व किं नु राजीविनीम् ।
एतान् दैववशादुपागतवतो दृष्ट्वैव मार्द्वीलिहो
मार्द्वीलाभजुषो महेच्छ मनसि द्वेषा न सयुज्यते ।।५५७।।

सन्ति सन्ति सरसो रमणीया यत्र यत्र वलते तत्र रङ्ग ।
राजहस रसिक स्मरणीया श्रीमता तदपि मानसकेलि ।।५५८।।

हा हन्त मानससरःसलिलावतंस
रे राजहंस पयसोः प्रविवेचनाय ।
यच् छक्तिमान् खलु भवान् न तथा किमु स्यात्
किं वा कपोत उत वा कलविङ्कपोतः ॥५५९॥

हंसी वेत्ति परागपिञ्जरतनुः कुत्रापि पद्माकरे
प्रेयान् मे बिसकन्दलीकिसलयं भुङ्क्ते हृदयं निर्वृतः ।
नो जानाति तपस्विनी यदनिशं जम्बालमालोडयन्
शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ॥५६०॥

हंसोऽध्वगश्रममपोहयितुं दिनान्ते
कारण्डकाकबककङ्ककुलं प्रविष्टः ।
मूकोऽयमित्युपहसन्ति लुनन्ति पक्षान्
नीचाश्रयो हि महतामवमानहेतुः ॥५६१॥

हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः ।
क्षीरनीरविभागेन हंसो हंसो बको बकः ॥५६२॥

हे हंस पक्षिप पयः सजलं विवेक्तुं
शक्तस्य सम्प्रति मतिः क्व नु ते प्रयाता ।
कासारवारिणि कलां पतितां यदिन्दो–
रादातुमिच्छसि बिसाङ्कुरवाञ्छया त्वम् ॥५६३॥

हारः

गुणवतस्तव हार न युज्यते
परकलत्रकुचेषु विलुण्ठनम् ।
स्पृशति शीतकरो जघनस्थली–
मुचितमस्ति तदेव कलङ्किनः ॥५६४॥

मुक्ताहार गुणीभूय नोपसर्पः स्तनस्त्वया ।
विभवे यस्य काठिन्यं व्यर्थं तदुपसर्पणम् ॥५६५॥

हेमकारः

साधो कुण्डलघटनापरिश्रमादलमविद्धकर्णा पूः ।
वसति दिगम्बरनगरे रजकश्चतुरोऽपि किं कुरुते ॥५६६॥

हे हेमकार परदुःखविहारदक्ष
किं मां प्रतापयसि वारशतानि वह्नौ ।
आतापितेन मम याति गुणातिरेको
धूमस्तवैव वदने शिल भस्मपातः ॥५६७॥

# (मुद्रितग्रन्थ उपक्रमांशगताः श्लोकाः)

## सरस्वतीप्रार्थना

त्वया क्रुत्ता युद्धे कुपितमनसो मित्रमपि मा
विभिन्दन्तो यान्तीर्त्यरिगृह्‌मितीनाय दयया ।
पदप्राप्तादित्य परिवृढ इवानेन हसता
धरानायेन ब्राह्म्यवतु रथपन् मामविरतम् ॥५६८॥

## देवीप्रार्थना

उषसि मागधमङ्गलगायकैर्झटिति जागृहि जागृहि जागृहि ।
अतिदयार्द्रकटाक्षनिरीक्षणैर्जगदिद जगदम्ब सुखीकुरु ॥५६९॥

## शिवप्रार्थना

उदरद्वयभरणभयादर्धाङ्गाहितदार ।
यदि नैव तस्यैकसुत क्यमद्यापि कुमार ॥५७०॥

किरीटे निशेशो ललाटे हुताशो भुजे भोगिराजो गले कालिमा च ।
तनौ कामिनी यस्य तत्तुल्यदेव न जाने न जाने न जाने न जाने ॥५७१॥

## हरिप्रार्थना

वित्तभूचित्तभूमत्तभूपालकोपासनावासनायासनादन्वहम् ।
साधुता सा धुता साधिता साधिता किं तया चिन्तया चिन्तयामो हरिम् ॥५७२॥

अघहरणचणचरणदल गलगहनदलनसरलशर ।
अतरलनतरतनय जय जय दशरथतनय जलजदलनयन ॥५७३॥

## कविप्रशसा

व्यासतु स तु गौतमतु व्यालेन्द्रतु यो न वेत्ति साहित्यम् ।
त प्रति सम्प्रति कम्प्रति शिरो मदीय पुरश्च न तिरश्च ॥५७४॥

अनाराध्य कालीमनास्वाद्य गौडीं विना मन्त्रतन्त्र विना शब्दचौर्यम् ।
प्रबन्ध प्रवक्तु प्रमोक्तु प्रशस्त विरिञ्चिप्रपञ्चे मदन्य कवि क ॥५७५॥

कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वास ।
नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेताला ॥५७६॥

## कविताप्रशसा

परिच्छिन्न स्वादोऽमृतगुडमधुक्षौद्रपयसः
कदाचिच् चाभ्यासाद् भजति ननु वैरस्यमधिकम् ।

प्रियाबिम्बोष्ठे वा रुचिरकविवाक्येऽप्यनवधि-
र्नेयानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥५७७॥

तथापि क्रियते ग्रन्थः सन्ति यद्यपि दुर्जनाः ॥
न हि दस्युभयाल् लोको दैन्ययानेव वर्तते ॥५७८॥

नृपतिप्रशंसा

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथं पूरयितुं समर्थः ।
अन्यैर्नृपालैः परिदीयमानं शाकाय वा स्याल् लवणाय वा स्यात् ॥७९॥

स्थितः स्वर्णपीठे नुतः पण्डितौघैः श्रितः सत्कवीन्द्रै रतः सत्कथासु ।
स तु क्रूरबुद्ध्या युतः क्ष्मापतिश्चेत् ततः किं ततः किं ततः किं ततः किम् ॥५८०॥

न याचे हिन्दूकं पर्वणि दत्तंकताम्रडब्बूकम् ।
याचे मुगलमुलूकं तृणीकृतस्वर्णचन्द्रकम् ॥५८१॥

लवङ्गीप्रशंसा

न याचे गजालिं न वा वाजिराजिं न वित्तेषु चित्तं मदीयं कदापि ।
इयं सुस्तनी हस्तविन्यस्तकुम्भा लवङ्गी कुरङ्गीदृगङ्गीकरोतु ॥५८२॥

इयं सुस्तनी मस्तकन्यस्तहस्ता कुसुम्भारुणं चारु वासो वसाना ।
अरं भासमानापि रम्भासमाना लवङ्गी कुरङ्गीदृगङ्गीकरोतु ॥५८३॥

इयं सुस्तनी मस्तकन्यस्तकुम्भा कुसुम्भारुणं चारु वासो दधाना ।
समस्तस्य लोकस्य चेतःप्रवृत्तिं गृहीत्वा घटे न्यस्य यातीव भाति ॥५८४॥

यवनी नवनीतकोमलाङ्गी शयनीये यदि नीयते कदाचित् ।
अवनीतलमेव साधु मन्ये न वनी माघवनी विनोदहेतुः ॥५८५॥

यवनी रमणी विपदः शमनी कमनीयतमा नवनीतसमा ।
उहिऊहिवचोऽमृतपूर्णमुखी स सुखी जगतीह यदङ्कगता ॥५८६॥

मुखं पङ्कजं लोचने खञ्जरीटौ कुचौ श्रीफले विद्युदेवाङ्गयष्टिः ।
यदि प्राणनाथेन हीना सुकेशी ततः किं ततः किं ततः किं ततः किम् ॥५८७॥

कालपीमन्दिरे बालपीनस्तनी जानु पीताम्बरा लाल्पीति प्रिया ।
नागराजीमदामोदमेदस्विनो मागरं मा गमः शाहजिन्शाहजो ॥५८८॥

---

# (१४) रसगङ्गाधरमात्रस्थपद्यानि

(अवशिष्टाशः)

अधर बिम्बमाज्ञाय मुखमब्ज च तन्वि ते ।
कीराश्च चञ्चरीकाश्च विन्दन्ति परमा मुदम् ॥१॥

अनल्पजाम्बूनददानवर्ष
तथैव हर्ष जनयञ्ज्ञनेषु ।
दारिद्र्यघर्मक्षपणक्षमोऽय
धाराधरो नैव धराधिनाथ ॥२॥

अनल्पतापा कृतकोटिपापा
गदैकशीर्णा भवदु खजीर्णा ।
विलोक्य गङ्गा विचलत्तरङ्गा-
ममी समस्ता सुखिनो भवन्ति ॥३॥

अनुकूलभावमथवा पराङ्मुखत्व सहैव नरलोके ।
अन्योऽन्यविहितमन्त्रौ विधिदिल्लीवल्लभौ वहत ॥४॥

अन्धेन पातभीत्या सञ्चरता विषमविषयेषु ।
दृढमिह मया गृहीता हिमगिरिशृङ्गादुपागता गङ्गा ॥५॥

अपकुर्वद्भिरनिश धृतराष्ट्र तवात्मजै ।
उप्यन्ते मृत्युबीजानि पाण्डुपुत्रेषु निश्चितम् ॥६॥

अल हिमानीपरिदीर्णगात्र
समापित फाल्गुनसङ्गमेन ।
अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा
भीष्मो महात्माजनि माघतुल्य ॥७॥

अवाप्य भङ्ग खलु सङ्गराङ्गणे नितान्तमङ्गाधिपतेरमङ्गलम् ।
परप्रभाव मम गाण्डिव धनुर्विनिन्दतस्ते हृदय न कम्पते ॥८॥

अविरतचिन्तो लोके वृक इव पिशुनोऽत्र पिशुन इव च वृक ।
भारतमिव सच्चित्त सच्चित्तमिवाय भारत सकृपम् ॥९॥

अविरलविगलद्दानोदकधारामारसिक्तधरणितल ।
धनदाप्रमहितमूर्त्तिजयतितरा सार्वभौमोऽयम् ॥१०॥

अशीतलोग्रचण्डांशुरनुग्रशिशिरः शशी ।
उग्रशीतस्त्वमेकोऽसि राजन् कोपप्रसादयोः ॥११॥

अस्थिमालामयीं दत्त्वा मुण्डमालामयीं तनुम् ।
गृह्णतां त्वत्पुरस्थानां को लाभः स्मरशासन ॥१२॥

अहं लतायाः सदृशीत्यखर्वं गौराङ्गि गर्वं न कदापि यायाः ।
गवेषणेनालमिहापरेषामेषापि तुल्या तव तावदस्ति ॥१३॥

अहमेको रणे रामो यातुधानाननेकशः ।
असहाया महात्मानो यान्ति काञ्चन वीरताम् ॥१४॥

अहितव्रत पापात्मन् मैवं मे दर्शयाननम् ।
आत्मानं हन्तुमिच्छामि येन त्वमसि भावितः ॥१५॥

अहीनचन्द्रा लसताननेन
ज्योत्स्नावती चापि शुचिस्मितेन ।
एषा हि योषा सितपक्षदोषा
तोषाय केषां न महीतले स्यात् ॥१६॥

आखण्डलेन नाकः कुण्डलिकुलकुण्डलेन पातालम् ।
नरमण्डन रिपुखण्डन भवता भूमण्डलं विभातितमाम् ॥१७॥

आज्ञा सुमेषोरविलङ्घनीया
किं वा तदीया नवचापयष्टिः ।
वनस्थिता किं वनदेवता वा
शकुन्तला वा मुनिकन्यकेयम् ॥१८॥

आताम्रा सिन्धुकन्याधवचरणनखोल्लासिकान्तिच्छटाभि-
र्ज्योत्स्नाजालैर्जटानां त्रिपुरविजयिनो जातजाम्बूनदश्रीः ।
स्वाभाव्यादच्छमुक्ताफलरचितलसत्पुच्छसच्छायशाया
पायादापासजालादमरसरिदघव्रातजातश्रमान् नः ॥१९॥

आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत् ।
क्षालनं भास्करस्येदं सारसैः सलिलोत्करैः ॥२०॥

आनन्दनेन लोकानामातापहरणेन च ।
कलापरतया चापि राजन्निन्दूपमो भवान् ॥२१॥

कलापरस्येव कलावशिष्टा विलूनमाला सवलीलतेव ।
अशोकमूलं परिपूर्णशोका सा रामयोषा चिरमभ्युपास्त ॥२२॥

कलेव सूर्यादमला नवेन्दो कृशानुपुञ्जात् प्रतिमेव हैमी ।
विनिर्गता यातुनिवासमध्यादध्याबभौ राघववर्मपत्नी ॥२३॥

काव्य सुधा रसज्ञाना कामिना कामिनी सुधा ।
धन सुधा सलोभाना शान्ति सन्यासिना सुधा ॥२४॥

खञ्जनदृशा निकुञ्ज गतवत्या गा गवेषयितुम् ।
अपहारिता समस्ता गावो हरिवदनपङ्कजालोकात् ॥२५॥

गाढमालिङ्गच सकला यामिनीं सहृतस्युषीम् ।
निद्रां विहाय स प्रातरालिलिङ्गाय चेतनाम् ॥२६॥

चराचरजगज्जालसदन वदन तव ।
गलद्गगनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना ॥२७॥

चराचरोभयाकारजगत्कारणविग्रहम् ।
कल्पान्तकालसक्रुद्ध हर सर्वहर नुम ॥२८॥

चूडामणिपदे धत्ते योऽम्बरे रविमागतम् ।
सता कार्यातिथेयीति बोधयन् गृहमेधिन ॥२९॥

त दृष्टवान् प्रथममद्भुतधैर्यवीर्य-
गाम्भीर्यमक्षणविमुक्तसमीपजानिम् ।
वीक्ष्याय दीनमबलाविरहव्ययार्तं
रामो न वायमिति सशयनाप लोक ॥३०॥

तद्दर्शनोपायविमर्शनार्थं
मया तदालीसदन गतेन ।
तत्रैव सालक्ष्यत पक्ष्मलाक्षी
दाक्षायणीमर्चयितु प्रायाता ॥३१॥

तपस्यतो मुनेर्वक्त्राद् वेदार्थमधिगत्य स ।
वासुदेवर्निविष्टात्मा विवेश परम पदम् ॥३२॥

तपोनिधे कौशिक रामचन्द्र
निनीषसे चेन् नय किं विकल्पं ।
निरन्तरालोकनपुण्यधन्या
भवन्तु वन्या अपि जीवभाज ॥३३॥

तवाग्रे यदि दारिद्रच स्थित भूप द्विजन्मनाम् ।
ध्वान्तं सवितुरप्यग्रे तम स्यास्यत्यसंशयम् ॥३४॥

तस्मिन् मणिव्रातहतान्धकारे
पुरे निशालोपविधानदक्षे ।
सद्यो वियुक्ता दिवसावसानं
कोकाः सशोकाः कथयन्ति नित्यम् ॥३५॥

तुषारास्तापसव्राते तामसेषु च तापिनः ।
दृगन्तास्ताडकाशत्रोर्भूयासुर्मम भूतये ॥३६॥

ग्रासैर्विना विराजन्ते शूराः सन्मणयो यथा ।
न दानेन विना भान्ति नृपा लोके द्विपा इव ॥३७॥

त्वयि दृष्टे त्वया दृष्टे भवन्ति जगतीतले ।
महान्तोऽप्यणवो राजन्नणवश्च महत्तराः ॥३८॥

त्वामवश्यं सिसृक्षन् यः सृजति स्म कलाधरम् ।
किं श्लाघ्यं तस्य वैदुष्यं पुराणस्य महामुनेः ॥३९॥

दिवि सूर्यो भुवि त्वं च पाताले पन्नगाग्रणीः ।
दिक्षु दिक्पालवर्गश्च राजपुङ्गव राजते ॥४०॥

दीनद्रुमान् वचोभिः खलनिकरैरनुदिनं दलितान् ।
पल्लवयन्त्युल्लसिता नित्यं तैरेव सज्जनधुरीणाः ॥४१॥

दृश्यतेऽनुदिते यस्मिन्नुदिते नैव दृश्यते ।
जगदेतन् नमस्तस्मै कस्मैचिद् बोधभानवे ॥४२॥

धनुर्विदलनध्वनिश्रवणतत्क्षणाविर्भवन्-
महागुरुवधस्मृतिः श्वसनवेगधूताधरः ।
विलोचनविनिःसरद्बहलविस्फुलिङ्गव्रजो
रघुप्रवरमाक्षिपञ् जयति जामदग्न्यो मुनिः ॥४३॥

धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टेर्जीवितं शारदायाः ।
भ्राता साक्षाद् ब्रह्मणो वेदमूर्तेराकल्पान्तं राजतामेष राजा ॥४४॥

धर्मेण बुद्धिस्तव देव शुद्धा
बुद्ध्या निबद्धा सहसैव लक्ष्मीः ।
लक्ष्म्या च तुष्टा भुवि सर्वलोका
लोकैश्च नीता भुवनेषु कीर्तिः ॥४५॥

न कपोतकपोतकं तव स्पृशतु श्येन मनागपि स्पृहा ।
इदमद्य मया समर्पितं भवते चारुतरं कलेवरम् ॥४६॥

न कपोत भवन्तमण्वपि स्पृशतु श्येनसमुद्भवं भयम् ।
इदमद्य मया तृणीकृतं भवदायुःकुशलं कलेवरम् ॥४७॥

नखकिरणपरम्पराभिरामं किमपि पदाम्बुरुहद्वयं मुरारेः ।
अभिनवसुरदीर्घिकाप्रवाहप्रकरपरीतमिव स्फुटं चकास्ते ॥४८॥

नखैर्विदारितान्त्राणां शवानां पूयशोणितम् ।
आननेष्वनुलिम्पन्ति हृष्टा वेतालयोषितः ॥४९॥

न भवानिह मे लक्ष्य. क्षत्रवर्णविलोपन' ।
के था विटपिनो राम कुलाचलभिदः पवेः ॥५०॥

न भाति रमणीयोऽपि वैराग्येण विना यति ।
वैदुष्येण विना विप्रो नरलोकस्त्वया विना ॥५१॥

नरैर्वरगतिप्रदेत्यय सुरैः स्वकीयापगे-
त्युदारतरसिद्धिदेत्यखिलसिद्धसङ्घैरपि ।
हरेस्तनुरिति श्रिता मुनिभिरस्तसङ्गैरिय
तनोतु मम श तनो. सपदि शन्तनोरङ्गना ॥५२॥

न वयं कवयस्तव स्तव
नृप कुर्वीमहि यन् मृषाक्षरम् ।
रणसीम्नि तवावलोकने
तरुणार्को दिनकौशिकायते ॥५३॥

नान्यास्ति किं भूमितले सुरूपा
सीतैव वा किं भवतोऽनुरूपा ।
आकर्षता चन्दनशाखिशाखां
प्रबोधितोऽयं भवता फणीन्द्रः ॥५४॥

नार्यः स यो न स्वहितं समीक्षते
न तद्धितं यन् न परानुतोषणम् ।
न ते परे यैर्नहि साधुताश्रिता
न साधुता सा नहि यत्र माधवः ॥५५॥

न्यञ्चति बाल्ये सुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि ।
मालिन्यमाविरासीद् राकाधिपलवलिकनकानाम् ॥५६॥

परिहरतु धरां फणिप्रवीरः सुखमयतां कमठोऽपि तां विहाय ।
अहमिह पुरुहूत पक्षकोणे निखिलमिदं जगदक्लमं वहामि ॥५७॥

पाण्डित्येन प्रचण्डेन येन माद्यन्ति दुर्जनाः ।
तेनैव सज्जना रूढा यान्ति शान्तिमनुत्तमाम् ॥५८॥

पूर्णमसुरै रसातलममरैः स्वर्गो वसुन्धरा च नरैः ।
रघुवंशवीरतुलना तथापि खलु जगति निरवकाशैव ॥५९॥

प्राणानर्पय सीतां वा गृध्रांस्तर्पय वा द्विजान् ।
यमं भजस्व रामं वा यथेच्छसि तथा चर ॥६०॥

प्रियो हृदयवर्ती मे न मां मुञ्चति जातुचित् ।
उत्तरे नावकाशोऽस्ति दूरतस्ते मनोरथः ॥६१॥

भगवद्वदनाम्भोजं पश्यन्त्या अप्यहर्निशम् ।
तृष्णाधिकमुदेति स्म गोपसीमन्तिनीदृशः ॥६२॥

भवद्द्वारि क्रुध्यज्जयविजयदण्डाहतिदलत्-
किरीटास्ते कीटा इव विधिमहेन्द्रप्रभृतयः ।
वितिष्ठन्ते युष्मन्नयनपरिपातोत्कलिकया
वराकाः के तत्र क्षपितमुर नाकाधिपतयः ॥६३॥

भाग्यं ते शाल्मलितरो वद किं परिकथ्यते ।
द्विजैः फलाशया युक्तैः सेव्यसे यदहर्दिवम् ॥६४॥

भास्करसूनावस्तं याते जाते च पाण्डवोत्कर्षे ।
दुर्योधनस्य जीवित कथमिव नाद्यापि निर्यासि ॥६५॥

भुजो भगवतो भाति चञ्चच्चाणूरचूर्णने ।
जगन्मण्डलसंहारे वेगवानिव धूर्जटिः ॥६६॥

महर्षेर्व्यासपुत्रस्य श्रावं श्रावं वचःसुधाम् ।
अभिमन्युसुतो राजा परां मुदमवाप्तवान् ॥६७॥

महीभृतां खलु गणे रत्नसानुरिव स्थितः ।
त्वं काव्ये वसुपार्धोश नृपपर्वेव राजसे ॥६८॥

मुनिः दयवशं भाति सततं पर्यटन् महीम् ।
विनिवृत्तक्रियाशानः क्वापि लोके शुकायते ॥६९॥

यथा तवाननं चन्द्रस्तथा ह्यगोऽपि चन्द्रिका ।
यथा चन्द्रसमश्चन्द्रस्तथा त्वं सदृशो तव ॥७०॥

यदि ते चरणाम्बुज हृदा
वहतो मे न हतो विपद्गण ।
अथ चण्डकरेण मण्डिते
दिनमध्येऽपि जित तमोगणं ॥७१॥

यदि सा मिथिलेन्द्रनन्दिनी नितरामेव न विद्यते भुवि ।
अथ मे कथमस्ति जीवित न विनालम्बनमाश्रितस्थिति ॥७२॥

यद्यनुष्णो भवेद् वह्निर्यद्यशीत भवेज् जलम् ।
मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक् ॥७३॥

यश्चरणत्राणीकृतकमलासनपन्नगन्द्रलोकयुग ।
सर्वाङ्गावरणपटीकृतकनकाण्ड स वामनो जयति ॥७४॥

ये त्वा ध्यायन्ति सतत त एव कृतिना वरा ।
मुधा गत पुराराते भवदन्यधिया जनु ॥७५॥

रणाङ्गणे रावणवैरिणो विभो शरा समन्ताद वलिता विरेजिरे ।
निदाघमध्यन्दिनवर्तिनोऽम्बरे सहस्रभानो प्रखरा करा इव ॥७६॥

रणे दीनान् देवान् दशवदन विद्राव्य वहति
प्रभावप्रागल्भ्य त्वयि तु मम कोऽय परिकर ।
ललाटोद्यज्ज्वालाकवलितजगज्जालविभवो
भवो मे कोदण्डच्युतविशिखवेग कलयतु ॥७७॥

रराज राजराजस्य राजहस करस्थित ।
हस्तनक्षत्रससक्त इव पूर्णो निशाकर ॥७८॥

राघवविरहज्वालासन्तापितसह्यशैलशिखरेषु ।
शिशिरे सुख शयाना कपय कुप्यन्ति पवनतनयाय ॥७९॥

राजा दुर्योधनो नाम्ना सर्वसत्त्वभयङ्कर ।
दीपानामिव साधूना झञ्झावात इवाभवत् ॥८०॥

राजा युधिष्ठिरो नाम्ना सर्वधर्मसमाश्रय ।
द्रुमाणामिव लोकाना मधुमास इवाभवत् ॥८१॥

राजेव सम्भृत कोष केदारमिव कर्षक ।
भवन्त श्रायता नित्य भयेभ्यो भगवान् भव ॥८२॥

राम स्निग्धतरश्याम विलोक्य वनमण्डले ।
धाराधरधिया धीर नृत्यन्ति स्म शिखावला ॥८३॥

रामं स्निग्धतरश्यामं विलोक्य वनमण्डले ।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः ॥८४॥

रामायमाणः श्रीरामः सीता सीतामनोहरा ।
ममान्तःकरणे नित्यं विहरेतां जगद्गुरू ॥८५॥

रामो विजयते यस्य क्षमात् सामर्थ्यवीक्षणात् ।
दावाग्निदग्धकान्तारलीलां लङ्कापुरी दधौ ॥८६॥

रूपवत्यपि च क्रूरा कामिनी दुःखदायिनी ।
अन्तःकाटवसम्पूर्णा सुपक्वेवेन्द्रवारुणी ॥८७॥

रोगस्य ते चिकित्सां निदानमालोच्य सुन्दरि करिष्ये ।
मा हन्त कातरा भूः रसाभिज्ञानां नितान्तनिपुणोऽस्मि ॥८८॥

लीलया विहितसिन्धुबन्धनः सोऽयमेति रघुवंशनन्दनः ।
दर्पदुर्विलसितो दशाननः कुत्र यामि निकटे कुलक्षयः ॥८९॥

शमयति हीनसत्त्वाननिसत्त्वानुद्धतान् विधानयति ।
शासयति सकलशत्रून् नीतिविदामग्रणीर्नराधिपतिः ॥९०॥

विचारिते महिमनि त्वदीये नित्यनिर्मले ।
परमात्मन् गगनमप्यायते परमाणुतान् ॥९१॥

वृन्दाविपिनगहनचरौ कुसुमायुधजननहननशक्तिधरौ ।
अरिकुललाञ्छनकरौ भीतिं मे हरिहरौ हरताम् ॥९२॥

ध्यानस्थाश्चलिताश्चैव स्फारिताः परमाकुलाः ।
पाण्डुपुत्रेषु पाञ्चाल्याः पतन्ति प्रथमा दृशः ॥९३॥

शशभृद्गगनतलसत्करा
गगनाम्भोरुहमालिकाधराः ।
तनयैः सह भाविजन्मनां
तव खेलन्ति नरेन्द्र वैरिणः ॥९४॥

श्यामं मलीमसोऽयं तव किमिति भयान्मद्गमात् कुत्र जातः
सोऽयं शीतांशुकान्ताश्रयमिव कथमभूत् तत्क्षणं कज्जलाभम् ।
प्रादुर्भूतप्रदीर्घश्रीनिरन्तरविद्युल्लतोर्मिभिनूतस्तनत्रासो-
ल्लसज्जीमूतधारासमुदितसरितां सर्वतः सङ्गमेन ॥९५॥

सदा ब्रह्मानुसन्धानसक्तानां सज्जनात्मनाम् ।
रहस्यात्मनिधानानि ततत्कुतनाम्नकैः ॥९६॥

सरोजतामय सता शिशिरर्तवताधुना ।
वर्भता सर्वधर्माणा राज्ञानेन विदर्भितम् ॥९७॥

साब्धिद्वीपकुलाचला वसुमतीमाक्रम्य सप्तान्तरा
सर्वा द्यामपि सस्मितेन हरिणा मन्द समालोकित ।
प्रादुर्भूतपरप्रमोदविदलद्रोमाञ्चितस्तत्क्षणं
ध्यानम्रीकृतकन्धरोऽसुरवरो मौलिं पुरो न्यस्तवान् ॥९८॥

सिन्दूरै परिपूरित किमयवा लाक्षारसै क्षालित
लिप्त वा किमु कुङ्कुमद्रवभरैरेतत् महीमण्डलम् ।
सन्देह जनयन् नृणामिति परित्राततिलोकस्त्विषा
व्रात प्रातरुपातनोतु भवता भव्यानि भासा निधे ॥९९॥

सुधेव वाणी वसुधेव मूर्ति सुधाकरश्रीसदृशी च कीर्ति ।
पयोधिकल्पा मतिरासफेन्दोर्महीतलेऽन्यस्य नहीति मन्ये ॥१००॥

स्थितेऽपि सूर्ये पद्मिन्यो वर्तन्ते मधुपै सह ।
अस्त गते तु सुतरा स्त्रीणा क प्रत्ययो भुवि ॥१०१॥

स्पृशति त्वयि यदि चाप स्वाप प्रापन् न केऽपि नरपाला ।
क्षोणे तु नयनकोणे को नेपालेन्द्र तव सुख स्वपितु ॥१०२॥

हालाहलसमो मन्युरनुकम्पा सुधोपमा ।
कीर्तिस्ते चन्द्रसदृशी भटास्तु मकरोद्भटा ॥१०३॥



# INDEX OF VERSES AND PROSE PASSAGES

[ The References are to pages and verses ]

## अ

आ

इ



ई



उ



ऊ

ऋ



ए



औ



क

ख



ग

घ



च



छ

ज



त

## द

ध



न

## प

फ



ब



भ

म

य

ल



व

## श

## स

ह

# ERRATA

| Page, Verse and Line | For | read |
| --- | --- | --- |
| 24.15 c | -तरणि- | -सरणि- |
| 53.21 | २२ (No. of the verse) | २१ |
| 53.22 | २३ (No. of the verse) | २२ |
| 114.17 (Commentary, beginning) | विशेषणीभूतानां... | अत्रोत्प्रेक्ष्यमाणस्य सर्वग्रहालम्बनत्वस्य समानाधिकरणेषु धर्मेषु तत्तद्ग्रहाश्रिताङ्कत्वेषु विशेषणीभूतैस्तत्तद्ग्रहैः सह विषयस्य राज्ञः कल्याणाश्रयत्वादिषु विशेषणीभूतानां......... |
| 128.52 b | उत्तार्यमाणोऽपि | उत्तार्यमाणेऽपि |
| 137.130 b | वद्धिर्यया | वृद्धिर्यया |
| 174.443 a | क्षत्रगर्भे | क्षेत्रगर्भे |
| 177.469 | ५६९ (No. of the verse) | ४६९ |

SANSKRIT ACADEMY SERIES

*General Edito*

Dr ARYENDRA SHARMA, M A, D Phil
Professor of Sanskrit, Osmania University,
and Director of the Sanskrit Academy

**PUBLISHED**

No 1 JÑĀNACATURVIMŚĪ of Naracandropādhyāya (An early work on Astronomy-Astrology, published for the first time)—Price Rs 1 50

No 2 PANDITARĀJA-KĀVYA-SANGRAHA (Complete Poetical Works of Panditarāja Jagannātha, published for the first time in a single volume)—Price Rs 6 00, bound Rs 8 00

**IN PRESS**

No 3 SAMSKṚTA-KAVI-JĪVITAM (Lives of Sanskrit Poets and Authors, in Sanskrit), by Pt Malladi Suryanarayana Shastri

No 4 A DESCRIPTIVE CATALOGUE OF SANSKRIT MANUSCRIPTS IN THE OSMANIA UNIVERSITY LIBRARY, Vol I (Vedic Literature)
Compiled by Shri K Sitaramaiya, M A

No 5 KRIYĀSVARALAKSANAM—YOHIBHĀSYAM (A treatise on Vedic Accent, published for the first time) Edited by Dr Aryendra *Sharma and Shri K Sitaramaiya*

No 6 ṚGARTHASĀRA (An unpublished commentary on selected verses of the Ṛgveda) Part I—Mantras and Commentary Part II—English Translation with Grammatical and Exegetical Notes

**UNDER PREPARATION**

No. 7. A DESCRIPTIVE CATALOGUE OF SANSKRIT MANUSCRIPTS IN THE OSMANIA UNIVERSITY LIBRARY, Vol. II (Jyautiṣa, Vaidyaka, Kāvya, Alaṁkāra etc.). Compiled by Shri K. Sitaramaiya, M.A.

No. 8. A HISTORICAL GRAMMAR OF SANSKRIT, by Dr. Aryendra Sharma.

No. 9. A COMPANION TO CLASSICAL SANSKRIT LITERATURE (A comprehensive reference book, containing all necessary information concerning works, authors, allusions etc.)

No. 10. MADANARATNAPRADĪPA—DĀNODYOTA (An important and extensive digest on Dharmaśāstra).

**POPULAR SERIES (in Press)**

No. 11. STORIES FROM SANSKRIT LITERATURE (in English, in several parts.)

No. 12. GEMS FROM SANSKRIT LITERATURE (An Anthology of Sanskrit Gnomic Poetry, with translation in English).